# चन्दमामा



सम्पुटः - १८ जुलै - २००१ सञ्चिका - ४

## अन्तरङ्गम्

**कथाः**



## एतस्य अङ्कस्य विशेषाः

कौशिकस्य तपः





भारतगौरव-गाथा

श्वश्र्वाः अस्वास्थ्यम्



यक्षपर्वतः



Printed and Published by B. Viswanatha Reddi at B. N. K Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Ltd., No - 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| शब्दः | | अर्थः |
|---|---|---|
| आन्तरङ्गिकः | – | internal |
| उच्चाङ्कः | – | highest mark |
| उत्पीठिका | – | table |
| उपेक्षा | – | negligence |
| एकाग्रचित्तता | – | concentration |
| कटुवचनम् | – | harshword |
| कनिष्ठः | – | younger |
| कूर्दनम् | – | hopping |
| क्रकचः | – | saw |
| खनिजम् | – | mineral |
| खनिजाङ्गारः | – | coal |
| चारित्र्यम् | – | character |
| चित्रपतङ्गः | – | butterfly |
| चूर्णम् | – | powder |
| ज्येष्ठः | – | elder |
| तक्षकः | – | carpenter |
| नामान्तरम् | – | another name |
| निदानम् | – | essential cause |
| परामृश्य | – | having criticised |
| पूतः | – | sanctified |
| भूगोलम् | – | geography |
| मातरि इव | – | like in mother |
| मुखावरणम् | – | mask |
| मुद्गरः | – | hammer |
| मुसलः | – | pestle |
| मूल्याङ्कः | – | stamp |
| यथानिर्देशम् | – | as per instruction |
| राङ्कवम् | – | shawl |
| लक्षितः | – | noticed |
| लोहकारः | – | black smith |
| वक्रीभवनम् | – | leaning |
| वाचनालयः | – | reading room |
| वालुका | – | sand |
| विकत्थनम् | – | self boasting |
| विष्ठा | – | feces |
| वृश्चिकः | – | scorpion |
| व्यङ्ग्यचित्रम् | – | cartoon |
| सङ्गणकम् | – | computer |

*संस्थापकौ -*

**चक्रपाणिः नागिरेड्डी च**

# चारित्र्यशिक्षणम्

इतः ५४ वर्षेभ्यः पूर्वम् एतस्मिन् एव मासे चन्दमामाप्रकाशनम् आरब्धम् । तेषु दिनेषु बालाः पाठ्यन्ते स्म - गणितं, लेखनं, पठनं च । किन्तु अनन्तरकाले सद्गुणकशिक्षणम् अपि आरब्धम् । तदनन्तरकाले शिक्षाविद्भिः चिन्तितं यत् चारित्र्यशिक्षणम् अपि दातव्यम् इति । यतः विद्यालयेषु सर्वे विषयाः पाठ्यन्ते स्म, ऋते चारित्र्यात् ।

वस्तुतस्तु चारित्र्यं कश्चन जन्मजातः गुणः । सः अध्यापयितुं न शक्यः, प्रत्युत परिष्कर्तुं शक्यः । धैर्यं, दया, सेवा, राष्ट्रभक्तिः इत्यादीनि चारित्र्यस्य विविधरूपाणि । धर्मभीरुता अपि सच्चारित्र्यस्य एकम् अङ्गम् । वस्तुतः धर्मः एव मानवस्य आचारं, व्यवहारं, चिन्तनं च परिष्कर्तुम् अर्हति ।

अस्माकं पुराणानि, इतिहासकाव्यादिग्रन्थाः, जानपदकथाः इत्यादयः सर्वेऽपि सच्चारित्र्यवर्धनैकहेतुकाः सन्ति । देवदेवतानाम् अस्तित्वादयः अपि मानवताविकासार्थम् एव परिकल्पिताः ।

पूर्वं गुरुकुलादिषु गुरवः स्वजीवनानुभवघटनाभिः, पूर्वजानां व्यवहाराणाम् उदाहरणैः च छात्रेषु गुणवर्धनं कारयन्ति स्म । किन्तु एषु दिनेषु तादृशाः गुरवः विरलाः जाताः दृश्यन्ते । अतः अनन्यगतिकतया तेषां जीवनघटनानाम् उदाहरणानां पठनात् मानवीयमौल्यानां विकासं साधयितुं प्रयासः विधेयः भवति ।

चन्दमामावाचकाः आ बहोः कालतः जानन्ति एव यत् एतस्यां प्रकाश्यमानाः कथाः अन्यविषयाः च मानवीयमौल्यानां विकासे उपकुर्वन्ति इति । यत्र विद्यालयाः अपि असाफल्यम् अनुभवन्ति तत्र चन्दमामा सफलताम् अनुभवति इति तु अभिमानस्य विषयः । अचिरात् एव कथानां द्वारा आकर्षकशैल्या शिक्षणं दातव्यम् अपि चिन्तयन्ती अस्ति चन्दमामा ।

'चन्दमामया चारित्र्यवर्धनम्' इत्येतत् घोषवाक्यं देशस्य सर्वेषु कोणेषु श्रूयेत इत्यस्ति अस्माकं महत्त्वाकाङ्क्षा ।

# वार्ताविशेषाः

## वक्रीभवनवेगः न्यूनतां गतः

पीसागोपुरस्य वक्रीभवनं वयं जानीमः एव । प्रतिवर्षम् अल्पप्रमाणेन सा वक्रीभवनप्रक्रिया वर्धमाना आसीत् । गतेषु दशसु वर्षेषु तस्य भवनस्य वक्रीभवने ४० सें. मी. (१.४ पादपरिमिताम्) न्यूनतां कल्पयितुं शक्ताः सन्ति विज्ञानिनः । यदा वक्रीभवनसमीकरणप्रक्रिया आरब्धा तदा तस्य तस्य भवनस्य शिखरं लम्बरेखातः १० पादपरिमाणेन दूरे आसीत् । एषा वक्रीभवनप्रक्रिया त्रिशतकेभ्यः पूर्वम् एव आरब्धा । द्वादशे शतके यदा एतत् निर्मितं तदा एव एतस्य वक्रीभवनलक्षणं दृष्टम् । यदा जगता एतत् लक्षितं तदा एतत् भवनम् आश्चर्यावहेषु नवसु अन्यतमत्वेन परिगणितं जातम् । १९९० तमे वर्षे द्रष्टृणाम् प्रवेशः अत्र निषेधितः । इदानीम् एवं हि श्रूयते यत् एप्रिल्मासतः प्रवेशः अनुमन्यमानः अस्ति इति । एतदर्थं प्रवेशशुल्कं भवति रू. ५००-००, तन्नाम १२ अमेरिकन्डालराणि ।

## भारतेन सम्मान्यते गगारिनः

समग्रः प्रपञ्चः यूरीगगारिनं स्मरति प्रथमगगन-यात्रिकत्वेन । गतस्य एप्रिल्मासस्य द्वादशे दिनाङ्के गगन-यात्रायाः चत्वारिंशत्तमं वर्षम् अतीतम् अभवत् । एताम् ऐतिहासिकीं घटनां निमित्तीकृत्य गगारिनस्य संस्मरणाय कश्चन मूल्याङ्कः प्रकाशयिष्यते भारतेन । १९६१ तमे वर्षे एप्रिल्मासस्य द्वादशे दिनाङ्के सः वोस्टोक् - १ यानेन गगनयात्रां कृतवान् । तेन १०८ निमेषान् यावत् अन्तरिक्षे स्थितम् । यः सामान्यः तरुणः आसीत् सः एव एतस्याः घटनायाः अनन्तरं प्रथमगगनयात्रिकत्वेन ख्यातः जातः । सा च घटना विंशतितमशतकस्य महाघटनात्वेन ख्याता जाता ।



## तस्य नाम 'डाट् काम्'



जीवनस्य मध्यभागे उत्तरार्धे वा जनाः सङ्ख्याशास्त्रादिकारणतः आधुनिकताप्रियताकारणतः च नूतनं नाम प्राप्नुवन्ति इति तु अस्माभिः ज्ञायते एव । टाम् क्रिस्टिः जरुसलेम्नगरे सङ्गणकतन्त्रांशनिर्माता । सः कदाचित् चिन्तितवान् – 'मया विनूतनं किञ्चित् नाम प्राप्तव्यम्' इति । अतः सः आधिकारिकतया स्वनाम परिवर्तितवान् 'टोनर्.काम्' इति । एतत् आन्तरवैश्विकजालसङ्केतवत् अस्ति इत्यतः एतत् सङ्केतरूपम् इति भ्रमः मास्तु । इस्रेल्सर्वकारेण एतत् नाम अनुमतम् अस्ति । एतन्नाम्ना एव परिचयपत्रं, पारपत्रं च प्राप्तम् अस्ति तेन ।



## विमानपक्षस्य उपरि सञ्चारः

दशवर्षीयः गौमासनः निक्मासनस्य पुत्रः । निक्मासनः 'पिङ्क्प्लायिड्'गणे वाद्यवादकः । तत्पुत्रः गौमासनः युगलविमानयोः पक्षयोः उपरि सञ्चारं कुर्वन् 'एतादृशसञ्चारं कृतवत्सु अत्यल्पवयस्कः' इति ख्यातिं प्राप्तवान् ।

## भित्त्यारोहकः पुनरपि सिङ्गपुरे !

अलियन् रोबार्टः फ्रान्स्देशीयः । जगति स्थितानाम् अत्युन्नतभवनानां भित्तेः आरोहणं तस्य साहसिकस्य प्रवृत्तिः । गते नवम्बर्मासे सः सिङ्गपुर-स्थम् एकविंशत्यट्टात्मकम् (९०० पादौन्नत्ययुक्तम्) भवनम् आरोढुं प्रयासं कृतवान् । किन्तु तस्य एतेन कृत्येन तत्रत्याः आरक्षकाः असन्तुष्टाः, यतः सः एतदर्थम् अनुमतिं न प्राप्तवान् आसीत् । सः इदानीं पुनरपि सिङ्गपुरम् आगतवान् अस्ति – जगति स्थितानाम् अत्युन्नतभवनानां दर्शनार्थम् । सः पुनरपि उन्नतभवनस्य आरोहणदिनाङ्कं निश्चितवान् अस्ति । आरक्षकविभागस्य अनुमतिः प्राप्येत इति तेन निरीक्ष्यते । किम् आरक्षकविभागीयाः अनुमतिं दद्युः ? भगवान् एव जनाति !



A  ACTIVE

B  BUZZ BOSS

C  CADET DX

D  DEVIL DX

E  ELEPHANT

F  FISH

G  GIRAFFE

H  HEN

I  INSECT

J  JOKER

K  KIDD DX

L  LIL ANGEL LAMBADA LIMEO

M  MISSILE MISS INDIA Jr

N  NEST

O  ORANGE

P  PIRANHA

Q  QUEEN Jr

R  ROBO COP

S  SPARKY SALSA

T  TERMINATOR




V W

*The largest range of kids bikes*

**HERO CYCLES**

THE ABC OF CYCLING

## वेताल-कथा

# कौशिकस्य तपः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यदा श्मशानाभिमुखं प्रस्थितवान् तदा शवान्तर्गतः वेतालः अवदत् - ''राजन्, अर्धरात्रे घोरान्धकारमये परिसरे निर्भयतया अग्रे गच्छतः भवतः मनस्स्थैर्यं निश्चयेन श्लाघार्हम् । भवतः साहसमनोभावं दृष्ट्वा अहम् नितराम् आश्चर्यचकितः अस्मि । किन्तु मम प्रश्नः अस्ति यत् भवान् कयाचित् स्वार्थभावनया पीडितः सन् एतत् दुस्साहसं कुर्वन् अस्ति, उत इतरेषाम् उपकारार्थम् इति । यदि कश्चित् लक्ष्यस्य प्राप्त्यर्थम् अवरोधान् सम्मुखीकर्तुं सन्नद्धः भवति तर्हि सः प्रशंसार्हः एव । किन्तु इतरेषां



वचनानाम् आधारेण ये निर्णयं कुर्वन्ति ते विवेकहीनाः एव इति मम विचारः । पूर्वं कौशिकेन अपि एतादृशः एव दोषः कृतः आसीत् । इतरेषां वचनैः प्रेरितः सन् सः स्वीकृतं कार्यं मध्ये एव स्थगितवान् आसीत् । 'भवान् अपि तादृशः अविवेकी मा भवतु' इति मम आशयः । अतः कौशिकस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

ततः वेतालः कथाम् आरब्धवान् -

प्राचीने काले गुरुमुखनामकस्य गुरोः गुरुकुले कौशिकनामकः विद्यार्थी विद्याभ्यासं कुर्वन् आसीत् । स्वस्य विंशतितमे वयसि एव सः सर्वाणि शास्त्राणि अधीत्य सर्वेषु शास्त्रेषु परिणतः अभवत् । अग्रे किं करणीयम् इति ज्ञातुम् अशक्तः सः मार्गदर्शनं प्राप्तुं गुरोः समीपं गतवान् ।

तदा गुरुः अवदत् - ''पुत्र ! भवति अपूर्वा शक्तिः अस्ति । असाधारणी बुद्धिः अस्ति । किन्तु भवति एकाग्रचित्ततायाः अभावः अस्ति । अतः किञ्चित्कालं भवान् तपः आचरतु । तदा भगवान् प्रत्यक्षः भूत्वा भवन्तं कर्तव्यं स्मारयेत्'' इति ।

एतदनुगुणं कौशिकः दण्डकारण्यं गत्वा कस्यचित् वटवृक्षस्य अधः उपविश्य तपसि लीनः अभवत् । तस्य तपोदीक्षा अपूर्वा आसीत् । उषसि उत्थाय सः प्रातर्विधिं समाप्य कन्दमूलफलानि खादित्वा ध्यानमग्नः भवति स्म । सूर्यास्तानन्तरं पुनश्च फलानि खादित्वा शयनं करोति स्म । एवं सप्त वर्षाणि यावत् सः तपः आचरितवान् । तथापि भगवान् प्रत्यक्षः न अभवत् ।

देशे सर्वत्र पर्यटनं कुर्वन् आगतः गुरुमुखः वटवृक्षस्य अधः शिष्यं कौशिकं दृष्टवान् । कौशिकः स्वस्य दुःखपूर्णां कथां गुरुं श्रावितवान् । तदा गुरुमुखः अवदत् - ''तपः आचरितुम् एकाग्रचित्तता नितराम् आवश्यकी । एकाग्रचित्ततायाः अभावस्य कारणतः तपसि विघ्नः तु न भवति खलु ?'' इति अपृच्छत् ।

तदा कौशिकः - ''नास्ति गुरुवर्य !'' इति अवदत् ।

''अहम् इदानीं मणिपालनामकेन राज्ञा मेलितुं गच्छन् अस्मि । ततः प्रत्यागत्य भवतः समस्यायाः परिहारं करिष्यामि'' इति उक्त्वा ततः प्रतिगतवान् गुरुमुखः ।

तदा एव मणिपालराजः काञ्चित् समस्यां सम्मुखीकुर्वन् आसीत् । तस्य समर्थः

कोषाधिकारी दिवङ्गतः आसीत् । तत्स्थाने अन्यस्य नियुक्तेः समस्या एव तं बाधते स्म ।

पूर्वतनः कोषाधिकारी धनागारस्य पुरतः एव वसति स्म । सः पत्नीपुत्राभ्यां सह तत्र सुखेन जीवनं यापयति स्म । किन्तु गाढनिद्रायां मग्नः अपि सः धनागारे लघुशब्दः भवति चेदपि झटिति जागरितः भवति स्म । यतः सः सदा एकाग्रचित्तः भवति स्म ।

विरागः, भोगः, वेगः चेति त्रयः युवकाः आसन् मणिपालराजस्य आस्थाने । त्रयः अपि कोषाधिकारित्वम् इच्छन्ति स्म । त्रयाणाम् अपि प्रतिपादनम् आसीत् यत् अहम् अत्यन्तम् एकाग्रचित्तः इति । राजा तेषां त्रयाणां युवकानाम् अभियाचनायाः विषये निर्णय-स्वीकरणे असमर्थः आसीत् ।

त्रिषु विरागः सङ्गीतविद्वान् आसीत् । भोगः महान् भक्तः आसीत् । वेगः परिश्रमी आसीत् । त्रयः अपि आत्मानं विश्वासयोग्यं भावयन्ति स्म । 'एतेषु त्रिषु कोषाधिकारि-रूपेण कः चेतव्यः' इति चिन्तने मग्नः आसीत् राजा । तदा एव गुरुमुखः तत्र आगतवान् ।

मणिपालराजः गुरुमुखस्य सत्कारं कृत्वा स्वस्य समस्यां गुरुमुखं निवेद्य - ''भवान् युक्ते समये अत्र उपस्थितः । कृपया कमपि परिहारं संसूच्य एतस्याः समस्यायाः मां मुक्तं करोतु'' इति प्रार्थितवान् ।

गुरुमुखः त्रीन् अपि युवकान् आहूय - ''भवतां त्रयाणाम् अपि एकाग्रचित्ततायाः परीक्षां कर्तुम् इच्छामि । दण्डकारण्ये मम शिष्यः कश्चन तपः आचरन् अस्ति । तस्य तपसः आचरणसमये विरागः घण्टाद्वयं यावत्



गीतानि गायतु एकाग्रचित्ततया । यावत् विरागः गीतं गायन् भवति तावत् भोगः शिवस्य अर्चनार्थं कण्टकमयेभ्यः सस्येभ्यः पुष्पाणि अवचिनोतु । तदा एव वेगः वृक्षशाखाः कुठारेण छिनत्तु । पञ्चाशत् काष्ठानि सङ्गृह्णातु सः'' इति अवदत् ।

त्रयः अपि गुरुमुखस्य नियमान् अङ्गी-कृतवन्तः । परेद्यवि राजा, तत्परिवारसदस्याः, गुरुमुखः, त्रयः युवकाः च दण्डकारण्ये स्थितं तं वटवृक्षं प्राप्तवन्तः । तदा कौशिकः नेत्रे निमील्य तपसि मग्नः आसीत् । त्रयः अपि स्पर्धार्थिनः स्वकार्यम् आरब्धवन्तः ।

मणिपालराजः गुरुमुखम् उद्दिश्य - ''भवतः शिष्यस्य तपः कठोरम् अपूर्वं च । निकटे एव महान् कोलाहलः भवति चेदपि सः विचलितः न अभवत् । ध्यानमग्नः एव



अतिष्ठत्'' इति प्रशंसापूर्वकम् अवदत् ।

तदा गुरुमुखः मन्दहासं प्रकटयन् - ''इदानीं परीक्षा मम शिष्यस्य न । अस्माभिः तु विरागस्य, भोगस्य, वेगस्य च एकाग्र-चित्ततायाः परीक्षा करणीया अस्ति'' इति उक्त्वा कञ्चित् सैनिकम् आदिष्टवान् - 'सूचनारवं करोतु' इति । सैनिकेन तथैव कृतम् । किन्तु केनाऽपि तत् न लक्षितम् एव । गुरुमुखस्य कथनानुसारं कतिचन सैनिकाः त्रीन् युवकान् परितः खड्गयुद्धं कृतवन्तः । तथापि कोऽपि परिणामः न लक्षितः । अनन्तरं कश्चित् सैनिकः व्याघ्रः इव गर्जितवान् । केचन पक्षिणः इव ध्वनिम् उत्पादितवन्तः । अन्यः कश्चित् - 'नद्यां जलस्तरः वर्धमानः अस्ति' इति उच्चैः आक्रोशं कृतवान् । तथापि ते युवकाः किञ्चिदपि विचलिताः न अभवन् ।

घण्टाद्वयाभ्यन्तरे विरागः पञ्चविंशतिं गीतानि गीतवान् । भोगः शतं पुष्पाणि अवचितवान् । वेगः पञ्चाशत् काष्ठानि छिन्नवान् । त्रयः अपि स्वकार्यं लोपं विना कृतवन्तः आसन् । ततः राजा मणिपालः गुरुमुखम् अपृच्छत् - ''कृपया एतेषु कः योग्यः इति भवान् एव सूचयतु'' इति ।

गुरुमुखः मन्दहासं प्रकटयन् त्रीन् युवकान् आहूय तान् अवदत् - ''भवतां त्रयाणाम् एकाग्रचित्ततायाः विषये अपरा अपि परीक्षा वर्तते । भवन्तः यदा कार्यमग्नाः आसन् तदा परितः किं प्रवृत्तम् इति वदन्तु'' इति ।

किन्तु विरागः, भोगः, वेगः वा आत्मानं परितः यत् प्रवृत्तं तत् किञ्चिदपि न अवगतवन्तः आसन् । तैः सैनिकानां सूचनारवः न श्रुतः, सैनिकानां युद्धं न दृष्टं, पक्षिणां कलरवः अपि न श्रुतः । तेषाम् एकाग्रचित्ततां दृष्ट्वा राजा नितराम् आश्चर्यचकितः अभवत् ।

तदा गुरुमुखः - ''एतेषु त्रिषु कः योग्यः इत्यस्य निर्णयः बुद्धिबलेन कर्तुं न शक्यः । तदर्थम् आवश्यकी तपःशक्तिः मम शिष्ये अस्ति'' इति वदन् द्विवारं कौशिकम् आहूतवान् ।

किन्तु कौशिकः किञ्चिदपि विचलितः न अभवत् । एवं दशवारं शिष्यम् आहूय अन्ते गुरुमुखः मौनम् आश्रितवान् ।

कौशिकस्य एकाग्रचित्ततां दृष्ट्वा राजा दिङ्मूढः । तस्य अभिनन्दनं कर्तुं सः सायं यावत् तत्रैव स्थितवान् । यदा सूर्यास्तः

अभवत् तदा कौशिकः नेत्रे उन्मीलितवान् ।

''अस्माकं कारणतः भवतः तपोभङ्गस्तु न जातः खलु !'' इति गुरुमुखः पृष्टवान् ।

तदा कौशिकः निराकारपूर्वकं शिरः चालयन् अवदत् - ''गुरुवर्य ! प्रातः यदा अहं तपः आरब्धवान् तदा द्वौ गजौ सिंहात् भीतौ पलायितौ । चत्वारः हरिणाः तृणं चरन्तः इतस्ततः सञ्चरन्ति स्म । कश्चित् पञ्चविंशतिं गीतानि गीतवान् । अपरः कश्चित् काष्ठानि छिनत्ति स्म । कश्चित् सूचनारवं कृतवान् । केचन खड्गयुद्धं कुर्वन्तः आसन् । व्याघ्रगर्जनं, पक्षिणां कलरवः च श्रुतः । अनन्तरं भवान् दशवारं माम् आहूतवान् । एवं मम एकाग्रचित्ततायाः भञ्जने समर्थाः अनेकाः घटनाः प्रवृत्ताः । तथाऽपि अविचलः सन् अहं तपसि मग्नः आसम् । मम एकाग्रचित्ततायाः विषये भवति विश्वासः समुत्पन्नः स्यात् इति भावयामि'' इति ।

शिष्यस्य वचनानि श्रुत्वा मन्दहासं प्रकटयन् गुरुमुखः राजानम् उद्दिश्य - ''राजन्, भवान् सूक्ष्मग्राही इति अहं भावयामि । विरागभोगवेगैः सह मम शिष्यस्य एकाग्रचित्तता अपि भवद्भिः अवलोकिता । कोषागारस्य पुरतः विद्यमानं गृहं मम शिष्याय ददातु । तं कोषाधिकारिणः पदे नियोजयतु । पर्णानां शब्देन अपि मम शिष्यः जागरितः भवति । अतः कोषागारस्य रक्षणे सः एव समर्थः'' इति अवदत् ।

राजा स्वस्य अङ्गीकारं प्रकटितवान् । किन्तु कौशिकः निराशः सन् - ''गुरुवर्य !..'' इति किमपि कथयितुम् उद्युक्तः । तावता गुरुमुखः तस्य वचनं मध्ये एव स्थगयन् - ''वत्स ! मम हार्दा इच्छा अस्ति यत् भवान् मणिपालराजस्य कोषाधिकारी



भवतु इति । भवान् तत्र स्वस्य सामर्थ्यं प्रकटयतु । गृहस्थाश्रमं प्रविश्य सुखेन जीवतु । एतेन भवतः राज्यस्य च कल्याणं भविष्यति'' इति वदन् गुरुमुखः स्वस्य गुरुकुलं प्रति गतवान् ।

एवं कथां श्रावयित्वा वेतालः अवदत् - ''राजन्, गुरुमुखः मणिपालराजाय यां सूचनां दत्तवान् सा विवेकपूर्णा आसीत् इति न भाति । यः सर्वेषु शास्त्रेषु पारङ्गतः आसीत्, यश्च भगवतः दर्शनाय कठोरं तपः आचरन् आसीत्, तादृशं कोषाधिकारिस्थाने किमर्थं नियोजितवान् सः ? एतत् अनुचितं ननु ? विरागभोगवेगाः एकाग्रचित्ततायाः मूर्तस्वरूपाः इव आसन् । तेषाम् अवमाननं किं न कृतं गुरुमुखेन ? तेषां विषये पक्षपातः किं न आचरितः ? राजानं सूक्ष्मग्राहिणं वदन् गुरुमुखः स्वार्थसाधनाय राज्ञः उपयोगं किं न कृतवान् ? गुरुमुखस्य व्यवहारस्य अन्तरार्थः कः स्यात् ? मम एतेषां सन्देहानां परिहारं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्त्रधा खण्डितं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''यदि कश्चित् स्ववृत्त्याम् अग्रस्थानं प्राप्तुम् इच्छति तर्हि तेन एकाग्रचित्तता सम्पादनीया एव । तदर्थं बुद्धिमत्तामात्रं न पर्याप्तम् । तादृशी एकाग्रचित्तता विरागे, भोगे, वेगे च आसीत् इति तु स्पष्टम् । किन्तु तपसा महत् कार्यं साधयितुम् इष्टवति कौशिके एकाग्रचित्ततायाः अभावः नितरां दृश्यते स्म । विषयज्ञानम् अन्यत्, कार्यसिद्ध्यर्थम् अपेक्षितं कौशलम् अन्यत् । कौशिके एकाग्रचित्ततागुणः न आसीत् । किन्तु सर्वत्र अवधानं दातुं सामर्थ्यं विशेषतः आसीत् तस्मिन् । अतः एव तपसि लीनः अपि सः परितः जातानां लघुघटनानां विषये ज्ञानवान् आसीत् । तादृशः एव कोषाधिकारी भवितुं योग्यः । कोषाधिकारिपदस्य इच्छुकाः ये त्रयः युवकाः आसन् ते स्ववृत्तिमात्रे एकाग्रचित्ताः । अतः तस्मिन् पदे भवितुं तेषाम् अर्हता नास्ति इत्येव वक्तव्यं भवति । गुरुमुखः जानाति स्म यत् स्वेन उक्तान् विषयान् राजा निश्चयेन अवगच्छति इति । अतः एव गुरुमुखः राजानं सूक्ष्मग्राहिणं कथयन् प्रशंसां कृतवान्'' इति ।

एवं राज्ञः मौनभञ्जने सफलः वेतालः शवसहिततया अदृश्यः भूत्वा पुनश्च वृक्षम् आरुह्य उपाविशत् ।





# यक्षपर्वतः

## ५

*[खड्गवर्मजीवदत्तौ सिंहं कस्यचित् शिथिलभवनस्य दिशि प्रेषयित्वा तस्मात् भवनात् निर्गत्य बहिः गमनार्थं मार्गम् अन्वेष्टुम् उद्युक्तौ जातौ । मार्गान्वेषणावसरे ताभ्यां कस्मिंश्चित् प्रकोष्ठे धान्यगोणीनां राशिः एव दृष्टः । तौ तासु धान्यगोणीषु अग्निं योजितवन्तौ । अत्रान्तरे पार्श्वप्रकोष्ठतः वेदनामिश्रितक्रन्दनध्वनिः श्रुतः । तत्र कश्चन वृद्धः ताभ्यां दृष्टः, यश्च निगडेन बद्धः आसीत् । तदनन्तरम्...]*

खड्गवर्मजीवदत्तौ दृष्ट्वा सः वृद्धः अपृच्छत् – ''भवन्तौ कौ ? दर्शनात् भासते यत् भवन्तौ तस्याः वराक्याः उपासिकायाः शिष्यौ न इति । यौ कौचित् स्यातां भवन्तौ । भवद्भ्यां मम रक्षणं करणीयम् । पार्श्वप्रकोष्ठे धान्यानि ज्वलन्ति । तत्तापकारणतः भित्तयः उष्णतां गताः सन्ति । अहम् अपि स्वेदेन अर्द्रः अस्मि'' इति ।

''अचिरात् एव छदिः अपि पतिष्यति'' इति वदन् जीवदत्तः वृद्धस्य समीपं गतवान् । हस्तस्थेन दण्डेन वृद्धस्य हस्तयोः योजितं निगडं भञ्जितवान् च । ततः तौ तं प्रकोष्ठात् बहिः आनीतवन्तौ ।

वृद्धः महता औत्सुक्येन परितः दृष्टिं प्रसारयन् उक्तवान् – ''बहूनां वर्षाणाम् अनन्तरं मया स्वातन्त्र्यं प्राप्तम् अस्ति । किम् अद्यापि सा वराकी उपासिका एतत् शिथिलनगरं शास्ति ? भवन्तौ कौ ? स्वपरिचयः न उक्तः एव भवद्भ्याम्'' इति ।

तदा जीवदत्तः अवदत् – ''भवतः कथनं श्रोतुं, प्रश्नानाम् उत्तरं वक्तुं वा इदानीं नास्ति समयः आवयोः । आवां तु शीघ्रातिशीघ्रम् इतः निर्गन्तुम् इच्छावः । भवान् आवाभ्यां सह आगन्तुम् इच्छति, उत अत्रैव स्थातुम्



इच्छति ? आदौ तत् वदतु'' इति ।

वृद्धः मान्त्रिकः क्षणकालं विचिन्त्य अवदत् - ''प्रतीकारम् असाधयित्वा, उपासिकायाः संहारम् अकृत्वा, अहं कदापि इतः न निर्गमिष्यामि । यदि मां स्वतन्त्रं पश्येयुः तर्हि मम पूर्वतनशिष्याः साहाय्यं कुर्युः एव । तेषां साहाय्यं स्वीकृत्य तां वराकीं खण्डशः कर्तयित्वा भूतेभ्यः बलिं ददामि । तदा एव मम तृप्तिः'' इति ।

यावत् जीवदत्तः किमपि वक्तुम् उद्युक्तः तावता उपासिका, मान्त्रिकः, जटामयी राक्षसी च तत्र उपस्थिताः । उपासिका वृद्धमान्त्रिकं दृष्ट्वा - ''अहो, अयं मृगालमतिः बन्धनात् मुक्तः अस्ति ! एतं वृद्धम्, एतौ दुष्टौ च इदानीमेव बलिरूपेण अर्पयिष्यामि'' इति वदन्ती अग्रे आगतवती ।

खड्गवर्मा झटिति धनुषि बाणम् आरोप्य तां लक्ष्यीकृत्य गृहीत्वा अगर्जत् - ''अये उपासिके ! इतोऽपि अग्रे यदि भवती एकं पदं स्थापयेत् तर्हि भवत्याः शिरः भूमौ पतेत् । सावधाना भवतु भवती'' इति ।

उपासिकायाः शिष्यः कश्चन हस्तस्थं शूलायुधं भ्रामयन् उक्तवान् - ''हे महाशक्तिशालिनि ! आर्ये ! एतं वृद्धोपासकं, तौ तरुणौ च मन्त्रशक्त्या भस्मसात्करोतु कृपया'' इति ।

''न । एतान् न भस्मसात्करिष्यामि झटिति । यतः एते महाभूताय बलिरूपेण अर्पणीयाः मया'' इति उक्त्वा उपासिका पार्श्वस्थां जटामयराक्षसीम् आदिष्टवती - ''किं मौनस्थित्या ? एतान् बन्धिनः करोतु शीघ्रम्'' इति ।

एतत् श्रुत्वा हसन् अवदत् जीवदत्तः - ''अये जटामयराक्षसि ! स्वामिन्याः आदेशस्य पालने कुतो वा विलम्बः ? हुँ, अस्मान् ग्रहीतुं प्रयत्नः क्रियताम् । तस्य परिणामः कः इति तदा एव ज्ञायते'' इति ।

जटामयराक्षसी भीतिम् अनुभवन्ती मान्त्रिकम् अपृच्छत् - ''गुरुवर्य ! किम् एतान् गिलेयम् ?'' इति ।

''अये, अलम् अन्यथाचिन्तनेन । उपासिकायाः आज्ञा स्मर्तव्या । एते सजीवं ग्रहीतव्याः इति खलु आदेशः तस्याः ? अविचिन्त्य व्यवहारेण दोषः न करणीयः अस्माभिः'' इति उक्तवान् मान्त्रिकः ।

तदा वृद्धोपासकः उच्चैः हसन् उक्तवान् - ''एतस्याः गुरुद्रोहिण्याः सकाशे इदानीं

नास्ति काऽपि मन्त्रशक्तिः । तस्याः सर्वाः शक्तयः मया प्रतिस्वीकृताः सन्ति'' इति ।

''एतत् सर्वथा असत्यम् । एतस्मिन् नयवञ्चके विश्वासः न करणीयः'' इति वदन्ती उपासिका वृद्धोपासकसमीपं गन्तुम् उद्युक्ता ।

''अलम् अग्रे गमनेन'' इति आज्ञास्वरेण वदन् खड्गवर्मा तस्याः हस्तं लक्ष्यीकृत्य बाणं प्रयुक्तवान् । बाणप्रहारतः तस्याः हस्ते स्थितः दण्डः अधः अपतत् । एतत् दृष्ट्वा आश्चर्यम् अनुभवन्तः शिष्याः उच्चस्वरेण उक्तवन्तः - ''अहो, एषा इदानीं मन्त्रशक्तिहीना जाता अस्ति । इतःपरं वृद्धोपासकः एव अस्माकं गुरुः'' इति ।



अत्रान्तरे अन्ये अपि शिष्याः तत्र आगताः । वृद्धोपासकः महता सन्तोषेण - ''अहो, महाभूतस्य कृपा ! बहूनां वर्षाणाम् अनन्तरं मम शिष्याः वस्तुस्थितिं ज्ञातवन्तः, सत्यस्य प्रकाशं प्राप्तवन्तः च । महाभूत ! इतःपूर्वम् इव इतःपरम् अपि काले काले भवते बलिं समर्पयन् भविष्यामि'' इति वदन् श्मश्रुरोमाणि सकृत् आमृश्य हस्तौ उन्नीय भगवन्तं नमस्कृतवान् ।

जीवदत्तः वृद्धोपासकं परीक्षादृष्ट्या सकृत् दृष्ट्वा खड्गवर्माणम् उद्दिश्य अवदत् - ''खड्गवर्मन् ! एषः वृद्धः अपि उपासिका इव दुष्टः क्रूरः च इति भाति'' इति ।

ततः सः सम्मिलितान् शिष्यान् उद्दिश्य - ''उपासिकावृद्धोपासकयोः कतरः श्रेष्ठः, कः आश्रयणीयः इति वयं न वदामः । भवताम् आन्तरङ्गिकः विषयः सः । भवन्तः यथोचितं निर्णयन्तु'' इति अवदत् ।

केचन वृद्धोपासकपक्षं समर्थितवन्तः, पुनः केचन उपासिकापक्षम् । अतः परस्परं प्रहरन्तः दूषयन्तः च ते कोलाहलम् उत्पादितवन्तः ।

एतत् दृष्ट्वा खड्गवर्मा अवदत् - ''जीवदत्त ! कलहप्रहारादिकारणतः उभौ मान्त्रिकौ, तच्छिष्याः च प्रायः मरणं प्राप्स्यन्ति'' इति ।

''मरणं प्राप्नुवन्तु नाम ते । ततः अत्र सिंहः कानिचन दिनानि विना श्रमम् आहारं वा प्राप्नुयात्'' इति अवदत् जीवदत्तः ।

एतदनन्तरं खड्गवर्मा खड्गं चालयन् वृद्धोपासकम् उद्दिश्य - ''अये मान्त्रिकवर्य ! एतां जटामयराक्षसीम् आदिशतु यत् - आवयोः इतः निर्गमनाय मार्गम् उपदिशतु इति'' इति असूचयत् ।

''अस्तु तावत्'' इति वदन् मान्त्रिकः ततः प्रस्थितवान् । पूर्वदिने ताभ्यां यत्र सुरङ्गमार्गः



प्रविष्टः आसीत् तत्र तौ नीतौ मान्त्रिकेण ।

गुहातः बहिः आगत्य तौ परितः सकृत् दृष्टिं प्रसार्य मान्त्रिकम् उक्तवन्तौ - ''इतः परं भवन्तः इतः प्रतिगन्तुम् अर्हन्ति । इतः गत्वा महाभूतं भक्त्या आराधयन्तु'' इति ।

''युक्तम् उक्तं भवद्भ्याम् । महाभूतस्य आराधनम् एव अस्माकं जीवितलक्ष्यम् । तस्य अनुग्रहप्राप्त्यर्थम् एव अस्माकं सर्वे प्रयत्नाः'' इति उक्तवान् मान्त्रिकः । एतावत् उक्त्वा ते ततः निर्गताः ।

अत्रान्तरे पर्वतशिखरतः कश्चन कोलाहलः श्रुतः इव । अपरक्षणे कश्चन उष्ट्रारोही भटः पर्वतशिखरात् पतन् दृष्टः ताभ्याम् ।

खड्गवर्मा जीवदत्तः च धावन्तौ तत्समीपं गतवन्तौ । उष्ट्रस्य पादः भग्नः आसीत् । उष्ट्रः वेदनामिश्रितध्वनिं निस्सारयति स्म । उष्ट्रारोही भटः अपि व्रणितः सन् क्रन्दनध्वनिं करोति स्म । खड्गवर्मा जीवदत्तः च तस्य वेषस्य दर्शनात् एव अभिज्ञातवन्तौ यत् अयम् आक्रामकपक्षीयः इति ।

जीवदत्तः तस्य भटस्य समीपं गत्वा अवदत् - ''अये, भाग्यशाली भवान् ! पर्वतशिखरात् पतितः अपि भवान् अङ्गवैकल्यम् अप्राप्य जीवति । भवतः उष्ट्रः तु अङ्गभङ्गं प्राप्य अन्तिमक्षणान् गणयन् अस्ति'' इति ।

खड्गं चालयन्तं वदन्तं जीवदत्तं सः भटः कम्पमानस्वरेण अवदत् - ''आर्य ! क्षन्तव्यः अहम् । गण्डकजातीयानां धान्यानाम् अपहरणकार्ये अहं सहभागी न आसम् । यदि मम वचने सन्देहः स्यात् तर्हि स्वर्णाचार्यम् एव प्रष्टुम् अर्हन्ति भवन्तः'' इति ।

एतस्य श्रवणात् जीवदत्त-खड्गवर्माभ्याम् अवगतं यत् स्वर्णाचार्यस्य न कोऽपि अपायः, सः आक्रामकैः सह अस्ति इति । अतः तौ सन्तुष्टौ । खड्गं चालयन् तं भटं पृष्टवान् खड्गवर्मा - ''यदि गण्डकजातीयानां धान्यस्य लुण्ठनावसरे भवान् उपस्थितः न स्यात् तर्हि कथं वा भवता अवगतम् - आवां गण्डकजातीयपक्षीयौ इति ?'' इति ।

''मम मित्रैः भवतोः विषये बहुधा उक्तम् अस्ति । भवतोः वेषभूषणादिकम् आयुधादिकं च दृष्ट्वा अहं भवन्तौ झटिति अभिज्ञातवान्'' इति शिरसः उपरि करौ योजयित्वा विनयेन अवदत् सः भटः ।

''दर्शनात् तु भासते यत् भवान् महाबुद्धिमान् इति । एतादृशः भवान् गुरुकुलं चालयन् विद्यादानं कर्तुम् अशक्ष्यत् ।

किमर्थम् एवम् आक्रामकाणां गणे स्थीयते ? भवत्पक्षीयाः उष्ट्राणाम् उपरि महाशिलाः आरोप्य नयन्तः सन्ति खलु ? किमर्थं नीयन्ते ताः ? तासाम् उपयोगेन किं भवनादिकं किमपि निर्मीयते ?'' इति पृष्टवान् खड्गवर्मा ।

''महाशय ! अस्माकं स्वामी राजधान्यां दुर्गनिर्माणं कारयन् अस्ति । स्वर्णाचार्यः एतदर्थं योग्यां योजनाम् आरचितवान् । तस्य आज्ञायाः अनुगुणम् एव भटाः ताः महाशिलाः नयन्तः सन्ति दुर्गनिर्माणार्थम्'' इति उक्तवान् सः भटः ।

एते यावत् एवं वार्तालापे मग्नाः आसन् तावता अन्ये भटाः एतान् लक्षितवन्तः । ते झटिति गत्वा स्वर्णाचार्यं वस्तुस्थितिम् उक्तवन्तः । स्वर्णाचार्यः महता सन्तोषेण तैः भटैः सह तयोः समीपम् आगतवान् ।

जीवदत्तः स्वर्णाचार्यं दृष्ट्वा सन्तोषम् अनुभवन् तस्य स्कन्धं मृदु प्रहरन् अवदत् - ''स्वर्णाचार्य ! कुशली खलु भवान् ? गच्छता कालेन भवान् एतेषां नायकः एव भवेत् इति भाति'' इति ।

''तथा तु नास्ति । अनन्यगतिकतया मया एतेषां नायकस्य समरबाहोः वचनं पाल्यते । तस्य इच्छायाः अनुगुणं वास्तुशास्त्रसम्मतं दुर्गं निर्मातुम् उद्युक्तः अस्मि । यदा एतत् दुर्गनिर्माणं समाप्यते तदा अहं विघ्नेश्वर-पूजकेन सह अरण्यं गत्वा तपः करिष्यामि'' इति उक्तवान् स्वर्णाचार्यः ।

''भवतः योजना तु उत्तमा एव । किन्तु गण्डकजातीयैः सह यः सुखेन वसति सः भवता सह आगत्य तपस्यां किं कुर्यात् इति



सन्देहः मम'' इति हसन् अवदत् जीवदत्तः ।

''सर्वं भगवतः इच्छाम् अवलम्बते । आस्तां तावत्, मम वसतिं गच्छाम । तत्रैव भोजनं विश्रान्तिः च प्रचलतु नाम'' इति उक्तवान् स्वर्णाचार्यः ।

ततः ते सर्वे पर्वतम् आरुह्य स्वर्णाचार्यस्य निवासस्थानं प्राप्तवन्तः । तत्र कोलाहलं कुर्वद्भिः भटैः आवृतः कश्चन भल्लूकचर्मधारी तैः दृष्टः । भटाः तं विविधैः प्रश्नैः पीडयन्तः आसन् । एतत् दृष्ट्वा स्वर्णाचार्यः पृष्टवान् - ''कः एषः ? कुतः आगतः अयम् ? किमर्थम् एतेन भल्लूकचर्म धृतम् ?'' इति ।

एतत् श्रुत्वा सः भल्लूकचर्मधारी एव स्वर्णाचार्यस्य समीपम् आगत्य नमस्कृत्य अवदत् - ''स्वर्णाचार्यवर्य ! मया उद्देश-पूर्वकम् अयं वेषः धृतः । अद्य प्रातः अहम्

अस्मन्नायकेन समरबाहुवर्येण सह मृगयार्थम् अरण्यं गतवान् आसम् । तदा आकस्मिकतया कैश्चित् आक्रमणं कृतम् । अस्मन्नायकः तैः बलात् नीतः अस्ति । अहं कथञ्चित् आत्मानं रक्षन् अत्र आगतः'' इति ।

''किं तैः आरण्यकैः भवतां नायकः एव गृहीतः ? अहो, साहसं तेषाम् ! ते आरण्यकाः क्व वसन्ति ? कुत्र एषा घटना प्रवृत्ता ?'' इति हसन् पृष्टवान् खड्गवर्मा ।

तदा जीवदत्तः अवदत् - ''मा हसतु जीवदत्त ! समरबाहुः दुष्टः एव । किन्तु तं ये बलात् अपहृतवन्तः ते तु महादुष्टाः । एतेषां विषये किं करणीयम् इति गाम्भीर्येण चिन्तनीयम् । हासस्य समयः नायम्'' इति ।

समरबाहुः आरण्यकैः अपहृतः अस्ति इति वार्तां श्रुत्वा स्वर्णाचार्यः आश्चर्यचकितः दिग्भ्रान्तः च । तस्य समग्रं शरीरं कम्पमानं जातम् ।

यद्यपि समरबाहुः एव तं बलात् अपहृत्य आनीतवान् आसीत्, तथापि गच्छता कालेन सः स्वर्णाचार्यस्य मित्रम् एव जातः । तदनुयायिनः अपि स्वर्णाचार्यम् आदरेण एव पश्यन्ति स्म । अतः समरबाहुविषये स्वर्णाचार्यस्य आदरः प्रवृद्धः आसीत् ।

''खड्गवर्मजीवदत्तौ ! वयम् इदानीं महत्या विपदा ग्रस्ताः स्मः । भवन्तौ तु महाशक्तिशालिनौ । आरण्यकेभ्यः समरबाहोः रक्षणं कर्तुं भवन्तौ एव समर्थौ । अतः एतद्विषये मनः करणीयम् इति मम प्रार्थना'' इति निवेदितवान् स्वर्णाचार्यः ।

जीवदत्तः खड्गवर्मा च परस्परमुखं सकृत् दृष्टवन्तौ । ततः खड्गवर्मा अवदत् - ''जीवदत्त ! इदानीं साहाय्यं करणीयं वा न वा इति, करणीयं चेत् कथम् इति च भवान् एव निर्णयतु । यथा भवान् आदिशति तथा करिष्यामि अहम्'' इति ।

जीवदत्तः क्षणकालं विचिन्त्य भल्लूकचर्मधारिणम् अपृच्छत् - ''भवतां नायकः आरण्यकैः कथं गृहीतः ? एषा घटना कुत्र प्रवृत्ता ? विस्तरेण वदतु तावत्'' इति ।

तदा सः भल्लूकधारी अवदत् - ''अरण्ये यत् प्रवृत्तं तत् सङ्क्षेपेण अहं वदिष्यामि । यदि भवन्तः अविलम्बेन अस्माकं नायकं न रक्षेयुः तर्हि ते आरण्यकाः तं खादेयुः अपि । यतः ते नरभक्षकाः'' इति ।

– *(अनुवर्तते)*



# मूर्खः पण्डितः

कस्मिंश्चित् ग्रामे कश्चन पण्डितः आसीत् । सः स्वपाण्डित्यविषये समग्रे ग्रामे विकत्थनं करोति स्म ।

एकदा कश्चन बुद्धिमान् पुरुषः तम् अवदत् - ''महाशय, एतस्मिन् ग्रामे प्रायः तादृशः कोऽपि नास्ति, यश्च भवतः पाण्डित्यं न जानीयात् । तथापि अत्र भवतः विशेषादरः तु सर्वथा नास्ति । पाण्डित्यस्य मूल्यं न जानन्ति अत्रत्याः । अतः भवान् अन्यग्रामान् गत्वा तत्रत्यान् पण्डितान् जयतु । तेन भवतः पाण्डित्यं समग्रे देशे प्रख्यातं स्यात्, अस्माकं ग्रामस्य कीर्तिश्च सर्वत्र प्रसृता भवेत्'' इति ।

एषा सूचना पण्डिताय अरोचत । अतः सः अनन्तरदिने एव उत्तमे मुहूर्ते ग्रामात् निर्गतवान् । यावत् सः पार्श्वस्थं ग्रामं प्राप्तवान् तावता कश्चन अजपालः तस्य सम्मुखम् आगतवान् । पण्डितः गर्वेण तम् अजपालं पृष्टवान् - ''भोः, भवतः ग्रामे किं कोऽपि पण्डितः अस्ति ? तम् अहं पराजेतुम् इच्छामि । अहं कश्चन महापण्डितः अस्मि'' इति ।

तदा अजपालः अवगतवान् यत् अयं पण्डितः महागर्वी इति । अतः सः अवनम्य मुष्टिमितां वालुकाम् उन्नीय पण्डितम् अपृच्छत् - ''मम हस्ते कियती वालुका अस्ति ?'' इति ।

तदा पण्डितः कोपेन अवदत् - ''कीदृशः असम्बद्धः प्रश्नः अयम् ! मापनं विना भवतः हस्ते कियती वालुका अस्ति इति कथं वा वक्तुं शक्येत ?'' इति ।

''पण्डितवर्य, मुष्टौ भवितुम् अर्हति वालुका मुष्टिमिता एव । एतावत् अपि अजानन् कीदृशः पण्डितः भवान् !'' इति हसन् अपृच्छत् अजपालः ।

अपमानितः पण्डितः ततः प्रतिगतवान् । तद्दिनात् सः विकत्थनं परित्यक्तवान् ।



# भारत-गौरव-गाथा

महासंस्कृत्याः स्थूलदर्शनम्, प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः

## १६. अहङ्कारं जितवान् राजा



सन्दीपः अवदत् - ''हरिश्चन्द्रस्य कथा अपूर्वा अस्ति । कथायाः श्रवणस्य अनन्तरम् इतः गमनस्य इच्छा एव न भवति पितामह !'' इति ।

तदा देवनाथः - ''तर्हि भवन्तः सर्वे अत्रैव भवन्तु । अहं तु प्रस्थितवान्'' इति कथयित्वा उत्थितवान् । बालाः अपि उच्चैः हसन्तः उत्थितवन्तः ।

''नद्याः तीरे किञ्चित्कालं विहराम किम् ?'' इति अपृच्छत् देवनाथः ।

''अस्तु पितामह !'' इति वदन्तः बालाः देवनाथम् अनुसृतवन्तः ।

किञ्चिद्दूरं गमनानन्तरं वज्रचूर्णेन निर्मिते दीर्घपीठे उपविशन् देवनाथः अवदत् - ''अहं किञ्चित्कालम् अत्र उपवेष्टुम् इच्छामि । यदि भवन्तः भ्रमणं कर्तुम् इच्छन्ति तर्हि कर्तुम् अर्हन्ति'' इति ।

तदा सन्दीपः अवदत् - ''यदा भवान् स्थितवान् तदा वयम् अपि स्थितवन्तः । यदा भवान् प्रस्थितवान् तदा वयम् अपि प्रस्थितवन्तः । यदा भवान् उपविष्टवान् तदा वयम् अपि उपविष्टवन्तः । भवतः अनुचराः खलु वयम् ?'' इति । सर्वे हसन्तः तत्र उपविष्टवन्तः ।

चमेली मन्दहासं प्रकटयन्ती - ''पूर्णचन्द्रः, कलरवपूर्वकं वहन्ती नदी, मन्दगत्या वहन् शीतलः पवनः च अमरां कथां श्रोतुम् अस्मान् प्रेरयति । रमणीयं मोहकं च अस्ति एतत् वातावरणम्'' इति उक्तवती ।

तदा सन्दीपस्य मित्रं रामः सन्देहं प्रकटितवान् - ''अस्माकं प्राचीनः इतिहासः ज्ञातव्यः इति

*अनुवर्तमाना कथामाला*

अस्माकं तीव्रा इच्छा वर्तते । अस्माकम् अध्यापकाः अस्मद्देशस्य उपरि जातानि आक्रमणानि, तेषां परिणामान् च बोधयन्ति । किन्तु याः कथाः भवान् वदति ताः कथाः अस्माकम् अध्यापकाः किमर्थं न वदन्ति ?'' इति ।

तदा देवनाथः अवदत् - ''एषः भवताम् अध्यापकानां दोषः । आङ्ग्लाः यस्य इतिहासस्य निमित्तं पाठ्यक्रमे स्थानं दत्तवन्तः तत्र एव किञ्चित् परिवर्तनं कृत्वा अस्मान् पाठयन्तः सन्ति ते । आङ्ग्लाः अस्माकम् इतिहासस्य वर्णलेपनं कुर्वन्तः, एवं भावनां निर्मितवन्तः यत् अस्माकं शासनकालः भारतस्य सुवर्णकालः आसीत् इति । स्वकार्यं साधयितुं तैः एतत् कृतम् आसीत् । तत् स्वाभाविकम् अस्ति । अतः प्राचीनकालीनाः उत्तमाः घटनाः विस्मार्य अस्माकं महापुरुषाणां विषये उदासीनता दर्शिता तैः । एतत्सर्वं काल्पनिकं पुराणम् इति कथयन्तः तस्य शिक्षणं निवारितवन्तः ते । किन्तु तेषां कथने सत्यांशः सर्वथा न आसीत् । अस्माकं पुराणानि ऐतिहासिकघटनाधारितानि सन्ति । अस्माभिः एषः विषयः भिन्नदृष्ट्या द्रष्टव्यः भवति । कतिचन पात्राणि कल्पितानि स्युः नाम, किन्तु तैः पात्रैः अस्माकं वंशश्रेणीनाम् उपरि महान् प्रभावः कृतः अस्ति एव । तेषां विचारपद्धतीनां प्रभावः तावान् अस्ति इत्यस्य अर्थः - ताः काल्पनिकाः सर्वथा न इत्येव । एतानि व्यक्ति-चित्राणि समाजे तावन्तं प्रभावं जनयन्ति, यावन्तं च जीवितव्यक्तयः अपि जनयितुं न शक्नुयुः । यानि व्यक्तिचित्राणि आ युगेभ्यः दीर्घकालीनं प्रभावं जनयन्ति सन्ति तेषां विषये ज्ञानम् अत्यावश्यकं खलु ! इतिहासरूपेण वा तस्य अवगमनम् अत्यन्तम् अनिवार्यम् एव'' इति ।

तदा चमेली अपृच्छत् - ''अधिकारे स्थितः हरिश्चन्द्रः अपि विनयपूर्वकं शासनं निरूढवान् । धर्मबद्धः सन् कर्तव्यनिष्ठः सन् च सः स्वस्य दायित्वं निरूढवान् । तादृशाः एव अन्ये राजानः यदि सन्ति तर्हि तेषां विषये कृपया वदतु'' इति ।

तदा देवनाथः अवदत् - ''अधिकारमदेन




निरङ्कुशम् अधिकारं चालितवन्तः राजानः एव अधिकाः । किन्तु अहङ्कारं जेतुं समर्थाः तु विरलाः इत्येव वक्तव्यं भवति । तेषु अन्यतमः जनक-महाराजः ।''

''प्रजाक्षेमम् एव तस्य लक्ष्यम् आसीत् । सः तु आत्मानं 'भगवतः सेवकः' इति मन्यमानः राज्यभारं निरूढवान् । स्वकर्तव्यानि समीचीनतया पालितवान् । तादृशेषु सुशीलेषु गुणवत्सु राजसु जनकः अन्यतमः ।''

चमेल्याः सखी सुस्मिता - ''अहङ्कारेण विना स्थितिः तावत्कष्टकरं किम्?'' इति अपृच्छत् ।

तदा देवनाथः अवदत् - ''सत्यं वत्से, अत्यन्तं कष्टकरं तत् । अन्यराज्यस्य विजयात् अपि कष्टकरं तत् । अहङ्कारं जितवन्तः राजानः अनेके सन्ति । बहुभ्यः वर्षेभ्यः तादृशानां कथाः अस्माभिः श्रूयमाणाः सन्ति । जनश्रुतिमहाराजस्य कथा एव अत्र उदाहरणं भवितुम् अर्हति । सः आदर्शरूपः राजा आसीत् । प्रजानां योगक्षेमवार्तां श्रुत्वा एव सः शयनार्थं गच्छति स्म ।''



एवम् उक्त्वा देवनाथवर्यः जनश्रुतिमहाराजस्य कथाम् आरब्धवान् -

''सहस्रवर्षेभ्यः पूर्वतनः विषयः एषः । अद्य इव तद्दिने अपि पूर्णिमा आसीत् । राजा भोजनं समाप्य प्रासादस्य उपरि अटन् आसीत् । तदा केचन हंसाः आकाशे डयमानाः सम्भाषणं कुर्वन्ति स्म । जनश्रुतिमहाराजः हंसानां भाषणं जानाति स्म । अतः सः हंसानां सम्भाषणं सावधानतया शृण्वन् आसीत् ।

कश्चन हंसः - ''अस्य राज्ञः प्रासादात् विचित्रप्रकाशः निस्सरति । एतादृशः प्रकाशः पूर्वमपि मया कुत्रचित् दृष्टः आसीत् । कुत्र इति न स्मरामि । कः स्यात् सः ?'' इति अपरं पृष्टवान् ।

अपरहंसः अवदत् - ''आम् । निस्सन्देहं सः प्रकाशः दिव्यप्रकाशः एव । किन्तु कुत्र दृष्टम् इति न स्मर्यते खलु । आम् ! स्मृतिपथम् आगतम् । रैक्वमहाराजस्य प्रासादस्य उपरिष्टात् गमनसमये अहं तादृशं प्रकाशं दृष्टवान् आसम् । सः प्रकाशस्तु एतस्मात् अपि महान् आसीत्'' इति ।

अनन्तरं हंसाः क्रमशः अस्पष्टाः अभवन् । हंसानां वचनानि श्रुत्वा जनश्रुतिमहाराजः किम् अकरोत् जानन्ति वा ? 'अपरः कश्चित् महान् पुरुषः अस्ति' इति श्रुत्वा सः सानन्दं निद्रामग्नः अभवत् ।

केषाञ्चित् दिनानाम् अनन्तरं जनश्रुतिमहाराजः रैक्वस्य विषये अधिकं विवरणं ज्ञातवान् । रैक्वः युवकः आसीत् । अतः जनश्रुतिमहाराजः तेन सह पुत्र्याः विवाहं कारितवान् । अनन्तरं राज्यम् अपि जामात्रे समर्प्य वानप्रस्थं स्वीकृत्य वनं गतवान् ।''

रामः अवदत् - ''राजानः सर्वे नीतिं, नियमं, सत्यं च श्रेष्ठानि भावयन्ति स्म । राज्ञां दृष्ट्या तेषां मूल्यम् अधिकम् आसीत् इति भाति'' इति ।

देवनाथः अवदत् - ''न केवलं तावत् । केचन राजानः तादृशाः अपि आसन्, ये ज्येष्ठानाम् अनुरोधकारणतः सत्यं वक्तुं सङ्कोचम् अनुभवन्ति स्म । एतस्य उदाहरणं नाम हरिदश्वः'' इति ।

तदा चमेली सानुरोधम् उक्तवती - ''पितामह ! तर्हि अवश्यं तस्य कथा श्रावणीया भवता'' इति ।

देवनाथः हरिदश्वस्य कथाम् आरब्धवान् -

हरिदश्वः न केवलं समर्थः कुशलः शासकः, अपि तु उत्तमः गायकः अपि । प्रायशः तस्मिन् काले तत्समानः गायकः अन्यः न आसीत् । कदाचित् सः उद्याने गायन् आसीत् । तदा नारदमहर्षिः तत्र आगतवान् । हरिदश्वस्य गानं श्रुत्वा व्यामुग्धः नारदः गानलोके विहारम् आरब्धवान् । सः एतां वार्तां ब्रह्माणं सरस्वतीं च श्रावितवान् । तौ अपि हरिदश्वस्य गानश्रवणे उत्सुकौ जातौ । नारदः तदर्थं व्यवस्थां कृतवान् । राजा ब्रह्मलोकं गतवान् । ब्रह्मा राजानम् अपृच्छत् - ''महाविष्णुः लोकरक्षकः अस्ति । सर्वदा लोकरक्षणे रतः सः निद्रां कर्तुं समयं न प्राप्नोति । किं भवान् स्वगानेन तस्य शान्तियुक्तां निद्रां कल्पयितुं शक्नुयात् ?'' इति ।

''भगवन् ! प्रयत्नं करिष्यामि'' इति राजा सविनयम् अवदत् ।

पुनः कदाचित् सः विष्णोः पुरतः गानं कृतवान् । तेन महाविष्णुः तन्मयः भूत्वा निद्रावशं गतवान् ।

राज्ञः सफलतया प्रसन्नः ब्रह्मा - "राजन् ! भवतः प्रतिभा अपूर्वा असाधारणी च अस्ति । कमपि वरम् इच्छति चेत् वदतु" इति अवदत् ।

राजा हरिदश्वः - "सङ्गीतस्य मूलपुरुषः परमेश्वरः । तस्य गानं श्रोतव्यम् इति मम तीव्रा इच्छा अस्ति । एषा एका एव मम अपेक्षा" इति अवदत् ।

ब्रह्मा तस्य अपेक्षाम् अङ्गीकृतवान् । शिवः अपि गानम् अङ्गीकृतवान् । परशिवस्य गानं श्रोतुं सर्वेऽपि देवाः समागताः । शिवः शङ्कराभरण-रागस्य आलापनम् आरब्धवान् । देवाः प्रसन्नाः अभवन् । परशिवस्य आलापस्य समाप्तेः अनन्तरम् अपि हरिदश्वः निश्चलः सन् उपविष्टवान् आसीत् ।

तदा ब्रह्मा तम् आहूतवान् । झटिति जागरितः हरिदश्वः - "अहं चिन्तितवान् यत् गानम् इतोऽपि प्रचलति इति । तत् एतावच्छीघ्रं समाप्तं किम् ?" इति आश्चर्यपूर्वकं पृष्टवान् ।

ब्रह्मा अपृच्छत् - "कथं भवान् गानं न समाप्तम् इति ज्ञातवान् ?" इति ।

तदा हरिदश्वः - "शङ्कराभरणस्य आलापसमये गायकेन प्रशान्तचित्ततया गातव्यम् । किन्तु ..." इति वदन् तत्रैव कथनं स्थगितवान् ।

तस्य वचनैः सर्वेऽपि आश्चर्यचकिताः अभवन् । राज्ञः कथनस्य आशयः आसीत् 'शिवः प्रशान्त-चित्ततया न गीतवान्' इति ।

शिवः तृतीयं नेत्रम् उद्घाटितवान् । सर्वे चिन्तितवन्तः - 'इदानीं शिवः अवमानकारणतः क्रुद्धः सन् कस्मिंश्चित् अपि क्षणे हरिदश्वं भस्मी-करिष्यति' इति । किन्तु तथा न अभवत् । परशिवः राज्ञः सत्यवचनेन धैर्येण च सन्तुष्टः अभवत् । तस्मिन् करुणां प्रदर्शितवान् । मन्दहासं कुर्वन्तं शिवं राजा साष्टाङ्गं नमस्कृतवान् ।

शिवः अवदत् - "ब्रह्मणः आज्ञया अहम् एतस्य रागस्य आलापनं कुर्वन् आसम् । तदपि एकस्य मानवस्य निमित्तम् । तदा मयि कश्चन सन्देहः उत्पन्नः यत् मम गानस्य आस्वादनसामर्थ्यम् अस्मिन् मानवे अस्ति किम् इति । एतादृश्याः चञ्चलतायाः कारणेन एव अहं प्रसन्नभावेन गातुम् असमर्थः अभवम् । अतः दोषः अभवत् । वस्तुतः दोषः मम एव । महान् गायकः एषः राजा एतत् सूक्ष्मं रहस्यम् अवगतवान्" इति ।

परमेश्वरस्य तृतीयात् नेत्रात् निस्सृतः अग्निः महाराजं पूतम् अकरोत् । तेन हरिदश्वः शक्तिसम्पन्नः अभवत् । अनन्तरं कदाचित् सः महेन्द्रं बन्धिनं कृतवन्तम् अन्धकारासुरनामकं घोरराक्षसं संहृत-वान् ।



# चतुरा स्नुषा

विद्याभ्यासस्य अनन्तरं शिवरामः भूस्वामिकार्यालये उद्योगं प्राप्तवान् । ततः षण्णां मासानाम् अनन्तरं सुन्दरी, सुशीला, गुणवती नीरजा तेन परिणीता । वरदक्षिणां विनैव एषः विवाहः प्रवृत्तः । एतत्कारणतः तस्य माता अनसूया स्नुषाविषये असन्तुष्टा । तथापि बान्धवानां, प्रतिवेशिनां च पुरतः वरदक्षिणास्वीकारं निराकृतवतः पुत्रस्य श्रेष्ठतां तु बहुधा प्रशंसति स्म सा । 'मम पुत्रसदृशः सरलः विवेकी तरुणः लोके दुर्लभः' इति वदति स्म सा ।

विजयदशमीपर्वावसरे नीरजायाः भगिनी गिरिजा अग्रजायाः गृहम् आगतवती । भगिन्यै एका शाटिका उपायनीकरणीया इति नीरजायाः इच्छा । सा स्वस्य इच्छां पतिम् उक्तवती । तदा शिवरामः अवदत् - ''भवत्याः चिन्तनं युक्तम् एव । किन्तु मम मातरं भवती जानाति एव । सा भवत्याः एतं निर्णयं निन्देत् । 'पत्न्याः वचनं वेदवचनं भावयन् एषः गृहसम्पत्तिं नाशयन् अस्ति' इति मां वदेत् अपि सा । अतः उपायेन व्यवहरतु'' इति ।

सायं शिवरामः यावत् कार्यालयतः आगतः तावता नीरजया एकः उपायः चिन्तितः आसीत् । सा तं पतिम् उक्तवती । शिवरामः तत् अङ्गीकृतवान् । तदनुगुणं सः अनन्तरदिने कार्यालयतः आगमनसमये एकाम् उत्तमशाटिकां क्रीत्वा आनीतवान्, मात्रे दत्तवान् च ।

तस्मिन् समये अनसूया प्रतिवेशिन्या पार्वत्या सह वार्तालापे मग्ना आसीत् । पार्वती तस्याः वचनं श्रद्धया शृण्वती आसीत् । सा उक्तवती - ''पुत्रः नाम एवं स्यात् । पत्न्यै नूतनशाटिकाम् अक्रीत्वा मात्रे नूतनशाटिकाम् आनीतवान् अस्ति सः । मातरि तस्य कीदृशी श्रद्धा इत्येतत् निरूपयति अयं व्यवहारः । निश्चयेन स्तुत्यर्हौ तौ दम्पती'' इति । पार्श्वे एव स्थितं शिवरामम् उक्तवती सा - ''एतेनैव सह यदि भवता गिरिजायाः निमित्तम् एका शाटिका क्रीता स्यात् तर्हि वरम् अभविष्यत्'' इति ।

पुत्रस्य व्यवहारतः, प्रतिवेशिन्याः प्रशंसातः च सन्तुष्टा अनसूया - ''गिरिजायै अपि शाटिकाम् एकाम् आनयतु इति यावत् अहं वक्तुम् उद्युक्ता तावता भवती एव मम वचनं चोरितवती । आस्तां तावत् । एताम् एव शाटिकाम् अहं तस्यै दास्यामि'' इति वदन्ती तां शाटिकां गिरिजायै दत्तवती ।

उपायः फलितः इत्यतः नीरजा शिवरामः च नितरां सन्तुष्टौ ।





# भूषणस्य पेटिका

भूपालपुरे भूषणनामकः कश्चित् कुसीद-वणिक् निवसति स्म । यथोचितं वृद्धिं स्वीकृत्य जनेभ्यः ऋणं ददाति स्म सः । अतः भूषणम् अजानन्तः जनाः एव प्रायः न आसन् भूषणपुरे ।

भूषणः स्वस्य समीपे विद्यमानस्य धनस्य विषये कमपि न वदति स्म । स्वस्य पत्नीम् भूदेवीम् अपि एतद्विषये न वदति स्म । भूदेवी अपि न पृच्छति स्म । भूदेव्याः एकम् अपि आभूषणं न आसीत् । यद्यपि भूषणः बहुधनं सम्पादयति स्म, तथापि तस्य शरीरे पुरातनानि जीर्णानि वस्त्राणि एव दृश्यन्ते स्म ।

भूषणस्य गृहे पूर्वजकालिकी एका काष्ठ-मयी पेटिका आसीत् । सा पेटिका सर्वदा कीलिता भवति स्म । पेटिकायाः कुञ्चिका सर्वदा भूषणस्य कटौ बद्धा भवति स्म । 'पेटिकायां धनम् अस्ति' इत्येतावदेव जानाति स्म भूदेवी, न तु धनं कियत् अस्ति इति ।

एकदा भूदेवी कस्मिंश्चित् शुभकार्ये भागं वोढुं प्रतिवेशिन्याः गृहं गतवती आसीत् । तत्र अन्याः महिलाः भूदेव्याः विषये वार्तालापं कुर्वन्ति स्म । ताः परस्परं वदन्त्यः आसन् - ''सन्तानः तु नास्ति । तथापि एकैक-वराटिकायाः विषये गणना क्रियते ! सम्यक् भोजनम् अपि न क्रियते । मङ्गलसूत्रं विहाय अन्यत् आभूषणं न दृश्यते शरीरे । कीदृशं जीवनम् एतत् !'' इति ।

तदा अन्या महिला हसन्ती - ''एतस्याः गृहे प्राचीनकालस्य काचित् पेटिका अस्ति इति श्रूयते । मम श्वश्रूः सर्वदा वदति स्म यत् भूदेव्याः पतिः कुञ्चिकां कटौ बद्ध्वा अटन् भवति इति । एतेन एव ज्ञायते यत् वृद्धेः द्वारा सम्पादितं धनं पेटिकायां सुरक्षितम् अस्ति इति'' इति अवदत् ।

तस्याः महिलायाः वचनैः भूदेवी अत्यन्तं खिन्ना अभवत् । उद्देशपूर्वकं ताः महिलाः



तथा व्यवहरन्त्यः अवमाननं कुर्वन्ति इति भूदेवी अवगतवती ।

तद्दिने रात्रौ सा स्पष्टरूपेण पतिम् उक्तवती – ''अस्यां पेटिकायां किम् अस्ति इति मया इदानीमेव ज्ञातव्यम् । यदि भवान् कथनं निराकरिष्यति तर्हि अहं कूपे पतनपूर्वकम् आत्महत्यां करिष्यामि'' इति ।

भूषणः पत्न्याः वचनस्य गाम्भीर्यम् अवगच्छन् – ''अवश्यं पश्यतु । किन्तु यत् भवती पश्यति तत् अनुक्षणम् एव विस्मर्तव्यम्'' इति वदन् पेटिकाम् उद्घाटितवान् । पेटिकायां विद्यमानानि स्वर्णाभूषणानि, सुवर्णनाणकानि च दृष्ट्वा भूदेवी आश्चर्यचकिता अभवत् । सा खिन्ना सती – ''अत्र एतावत् सुवर्णं व्यर्थं पतितम् अस्ति । किन्तु मम समीपे एकम् अपि आभूषणं नास्ति । पर्वदिने अपि केवलाः रोटिकाः सूपः च । कीदृशं जीवनम् अस्माकम् !'' इति अवदत् ।

तदा भूषणः – ''श्रृणोतु तावत् । किमर्थम् आक्रोशः ? मन्दं वदतु । पेटिका यदा पूर्णा भविष्यति तदा तां स्वीकृत्य नगरं गच्छाव । तत्र गत्वा समुद्रवाणिज्यं करिष्यामि । अनन्तरं भवत्याः शरीरे भविष्यन्ति बहूनि आभूषणानि'' इति पत्न्याः सान्त्वनं कृतवान् ।

तदा भूदेवी अपृच्छत् – ''एषा पेटिका कदा पूर्णा भविष्यति ?'' इति ।

''सर्वं भगवदिच्छाम् अवलम्ब्य अस्ति । मया प्रतिज्ञा कृता अस्ति यत् यावत् पेटिका पूर्णा न भविष्यति तावत् इतः एकं नाणकम् अपि न स्वीकरोमि इति'' इति उक्त्वा पेटिकां पिहितवान् भूषणः ।

तद्दिने रात्रौ भूदेवी एकं स्वप्नं दृष्टवती । तस्मिन् स्वप्ने भूषणः द्वयोः साहाय्येन पेटिकाम् अश्वशकटे आरोपयन् आसीत् । परेद्यवि सा स्वप्नवृत्तान्तं पतिं निवेद्य – ''आवां शीघ्रमेव नगरं गच्छाव'' इति उक्तवती ।

''धनलक्ष्म्याः कृपा यदि स्यात् तर्हि निश्चयेन पेटिका पूर्णा भविष्यति । भवत्याः स्वप्नः साकारः भविष्यति'' इति अवदत् भूषणः ।

तद्दिने सायं तौ लक्ष्मीमन्दिरं गतवन्तौ । तत्र भूदेवी देवीं प्रार्थितवती यत् मम स्वप्नः साकारः भवतु इति । अनन्तरं उभौ अपि एकस्मिन् कोणे उपविश्य मन्दिरे दत्तं प्रसादं खादितुम् उद्युक्तौ ।

तदा तत्र द्वौ श्मश्रुधारिणौ बलशालिनौ पुरुषौ आगतवन्तौ । तौ अर्चकम् उद्दिश्य



पृष्टवन्तौ – ''स्वामिन्, कृशाङ्गी मृगनयना काचित् सुन्दरी भवता किम् अत्र कुत्रापि दृष्टा ? तस्याः ओष्ठस्योपरि तिलमात्रकं कालकम् अस्ति'' इति ।

तदा अर्चकः – ''तादृशी युवतिः अत्र न आगतवती एव । तदस्तु, का सा युवतिः ?'' इति अपृच्छत् ।

तौ पुरुषौ उच्चस्वरेण – ''सा न अन्या, अपि तु अस्माकं युवराज्ञी चन्द्रलेखा एव । एषु दिनेषु कदाचित् सा पूर्वप्रान्ते विहारार्थं गतवती आसीत् । तत्र सा कस्मिंश्चित् भिल्लजातीययुवके अनुरक्ता अभवत् । तमेव परिणेष्यामि इति सा दृढस्वरेण राजानम् उक्तवती । ततः क्रुद्धः राजा पुत्रीं बहुधा निन्दितवान् । अतः सा कमपि अनुक्त्वा अन्तःपुरात् पलायनं कृतवती । राज्ञा घोषणा कृता अस्ति यत् – यः युवराज्ञीम् आनेष्यति तस्मै पञ्चाशत्सहस्रसुवर्णनाणकानि दीयन्ते इति'' इति ।

एतत्सर्वं श्रुतवान् भूषणः पत्नीम् अवदत् – ''पञ्चाशत्सहस्रसुवर्णनाणकानि प्राप्तानि चेत् अस्माकं पेटिका निश्चयेन पूर्णा भवेत्'' इति ।

''तर्हि किमर्थं विलम्बः ? इदानीमेव ताम् अन्वेष्टुं गच्छतु'' इति उक्तवती भूदेवी ।

तदा भूषणः अवदत् – ''पूर्वप्रान्ते अहं कथं गच्छानि ? नैव शक्यते मया । तत्र व्याघ्रादयः हिंस्रपशवः विहरन्ति'' इति ।

तद्दिने रात्रौ भोजनं समाप्य भूदेवीभूषणौ यावत् शयनार्थम् उद्युक्तौ तावता द्वार-ताडनशब्दः श्रुतः । 'अर्धरात्रे कः आगतवान् स्यात् ?' इति चिन्तयन् भूषणः द्वारम् उद्घाटितवान् । तत्र युवराज्ञीं दृष्ट्वा आश्चर्य-चकितः अभवत् सः । मन्दिरे यथा श्रुतम् आसीत् तथैव सा कृशकाया मृगनयना च आसीत् । ओष्ठस्योपरि कालकम् अपि आसीत् । सः चिन्तितवान् – 'भाग्यलक्ष्मीः मम गृहम् अन्विष्य आगता' इति ।

तावता सा युवतिः अपृच्छत् – ''अहम् एकाकिनी अस्मि । एतस्यां रात्रौ भवतः गृहे मम आश्रयः भवितुम् अर्हति किम् ?'' इति ।

''निश्चयेन । अन्तः आगच्छतु तावत्'' इति उक्त्वा एकस्मिन् प्रकोष्ठे ताम् उपवेश्य पार्श्वस्थप्रकोष्ठे शयितां भूदेवीम् उत्थाप्य भूषणः अवदत् – ''आवयोः भाग्यरेखा प्रकाशिता इति भाति । सा युवराज्ञी स्वयम् आवयोः गृहम् आगतवती अस्ति'' इति ।





भूदेवी तां दृष्ट्वा सन्देहं प्रकटयन्ती – ''एषा युवराज्ञी इत्यत्र कथं विश्वासः कर्तुं शक्येत ? एतस्याः शिरसि किरीटं न दृश्यते । शरीरे भूषणानि अपि न सन्ति'' इति उक्तवती ।

तदा भूषणः – ''अन्तःपुरतः पलायिता सा आभूषणादिकं धृत्वा कथं गच्छेत् ? सा स्ववेषं परिवर्तितवती स्यात् । अहम् इदानीमेव अश्वशकटेन प्रस्थाय राजानं सूचयित्वा सैनिकान् स्वीकृत्य आगमिष्यामि । श्वः रात्रौ पेटिका पूर्णा भविष्यति'' इति उक्त्वा अश्व-शकटं स्वीकृत्य राजधानीं प्रति प्रस्थितः ।

अर्धमार्गे एव अश्वशकटेन स्थातव्यम् अभवत् । यतः अग्रे बहूनि वाहनानि स्थितानि आसन् । नद्याः जलस्तरस्य वर्धनं जातम् आसीत् इत्यतः वाहनानि अग्रे गन्तुं न शक्नुवन्ति स्म । शकटचालकः निराशतया – ''अस्माभिः एषा रात्रिः अत्रैव यापनीया भवेत्'' इति अवदत् ।

शाकटिकस्य वचनैः भूषणः तडिदाघातम् अनुभूतवान् इव । 'प्रातःकालात् पूर्वं गृहं यदि न गमिष्यामि तर्हि युवराज्ञी गतवती भविष्यति । अतः गृहं गत्वा युवराज्ञ्याः प्रकोष्ठः कीलनीयः' इति सः चिन्तितवान् ।

भूषणः शकटेन एव प्रत्यागतवान् । गृहस्य द्वारम् उद्घाटितम् आसीत् । भीतः सः गृहं प्रविष्टवान् । एकः प्रकोष्ठः बहिष्टात् कीलितः आसीत् । अन्तः भूदेव्याः क्रन्दनं श्रूयते स्म ।

भूषणः द्वारम् उद्घाटितवान् । भूदेवी रज्ज्वा बद्धा आसीत् । अनुक्षणं सः तां बन्धनात् मोचयित्वा पृष्टवान् –''युवराज्ञी कुत्र ? किम् अभवत् अत्र ?'' इति ।

तदा भूदेवी अवदत् – ''सा युवराज्ञी न, अपि तु चोराणां राज्ञी । अहं शयनार्थं यावत्

उद्युक्ता अभवं तावता सा गत्वा द्वारम् उद्घाटितवती । आवाभ्यां मन्दिरे दृष्टौ श्मश्रुधारिणौ बलशालिनौ पुरुषौ अन्तः आगतवन्तौ । तौ अस्माकं गृहे विद्यमानायाः पेटिकायाः विषये सर्वं जानीतः स्म इति भाति । तौ मां रज्ज्वा बद्ध्वा प्रकोष्ठे कीलयित्वा पेटिकया सह गतवन्तौ'' इति ।

पत्न्याः वचनं श्रुत्वा हस्तेन ललाटं घट्टयन् भूमौ उपविष्टवान् भूषणः ।

भूदेवी तस्मै जलं यच्छन्ती अवदत् - ''किमर्थं भवता तावत् दुःखम् अनुभूयते ? सुवर्णेन पूर्णायां पेटिकायां सत्याम् अपि आवां दारिद्र्यपूर्णं जीवनं यापितवन्तौ एव खलु ? इदानीमपि पेटिका गृहे अस्ति इति मत्वा तादृशम् एव जीवनं यापयाव । अन्यः मार्गः तु नास्ति'' इति ।

भूषणः अश्रुपूर्णनेत्रः सन् भूदेवीम् अवदत् - ''भवती प्राचीनकालीनाः स्त्रियः इव पतिव्रता अस्ति । 'अन्ततो गत्वा अस्मिन् गृहे किम् अवशिष्टम् ? अहं मातृगृहं गमिष्यामि' इति भवत्या न उक्तं यत् तदेव भवत्याः सात्त्विकं स्वच्छं मनः द्योतयति । यावत् भवत्याः श्लाघनं करोमि चेत् अपि न्यूनमेव । इतः परं भवती निश्चिन्ता तिष्ठतु । इतः परं जनेभ्यः यावत् प्राप्तव्यं तावदेव धनं स्वीकरिष्यामि । नगरे वस्त्रापणस्य आरम्भं करिष्यामि । ततः द्वित्रेषु वर्षेषु लक्षशः रूप्यकाणि सम्पादयिष्यामि'' इति ।

तदा भूदेवी अपृच्छत् - ''लक्षशः रूप्यकाणि स्थापयितुं पेटिका तु न क्रीयते खलु ?'' इति ।

''कदापि न । इदानीं तादृश्यः पेटिकाः कालबाह्याः अभवन् । यत् अस्ति तेनैव तृप्त्या जीवाव'' इति तृप्त्या अवदत् भूषणः ।

भूषणः यथा उक्तवान् तथैव आचरितवान् अपि । सः विविधानि वाणिज्यानि कृत्वा परिश्रमेण प्रभूतं धनं सम्पादितवान् । द्वित्रेषु एव वर्षेषु सः भूपालपुरस्य धनिकेषु अन्यतमः अभवत् ।

सः यावत् अर्जयति स्म तावत् पत्न्यै ददाति स्म । तौ सुखेन वसन्तौ परोपकारे आसक्तिं दर्शितवन्तौ ।





# कपटवैद्यः

कुम्भपुरे शिवदेवः नाम कश्चन कपट-वैद्यः निवसति स्म । सः जनानां पुरतः – 'अहं महावैद्यः अस्मि' इति वदति स्म । केचन तस्य वचने विश्वासं कुर्वन्ति स्म । तेभ्यः किमपि औषधं दत्त्वा धनं स्वीकृत्य सुखेन स्वजीवनं यापयति स्म सः ।

कदाचित् तस्य देशस्य राजकुमारः अस्वस्थः जातः । तेन न बुभुक्षा प्राप्यते स्म, न वा पिपासा । सदा शय्यायां शयितः भवति स्म सः । महता प्रयत्नेन अपि राजवैद्यः अपि तदीयरोगस्य कारणं ज्ञातुं न शक्तः । अतः राजा चिन्ताक्रान्तः जातः ।

राज्ञः चिन्तां दृष्ट्वा मन्त्रिणः उक्तवन्तः – ''शिवदेवस्य आनयनं वरम्'' इति ।

''किं शिवदेवः अपि कश्चन वैद्यः ? धन्वन्तरिप्रभृतयः राजवैद्यादयः अपि यस्य कारणं न ज्ञातवन्तः तं रोगं किं शिवदेवः शमयेत् ?'' इति अपृच्छत् राजवैद्यः ।

राजा मौनेन तिष्ठन् राजवैद्यस्य कथनं समर्थितवान् इव ।

तदा वृद्धमन्त्री अवदत् – ''शिवदेवः वैद्यशास्त्रनिपुणः न स्यात् । किन्तु केषाञ्चित् औषधानां दानं सः जानाति एव । अन्यथा तेन दत्तेन औषधेन कोऽपि स्वस्थः न भवेत् । महावैद्येन अपि शमयितुम् अशक्यं रोगं अरण्यवासिनः ग्रामवैद्याः वा उपशमयन्ति इति तु श्रुतपूर्वम् । अतः शिवदेवस्य साहाय्यस्वीकारे न दोषः'' इति ।

राजा क्षणकालं विचिन्त्य अवदत् – ''तर्हि एवं करवाम । आदौ शिवदेवस्य सामर्थ्यस्य परीक्षां करवाम । राज्ये येषां रोगं निवारयितुं केनापि न शक्तं तादृशानां केषाञ्चित् रोगिणां चिकित्सार्थं शिवदेवं योजयाम । यदि तेषां चिकित्सायां सः सफलः स्यात् तर्हि राजकुमारस्य चिकित्सार्थम् अपि सः प्रयत्नं करोतु । असफलः चेत् तदीयं मरणदण्डनं विधास्यामः'' इति ।

*पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा*

राज्ञः एषः प्रस्तावः मन्त्रिप्रभृतिभिः अनुमतः । ते भटानां द्वारा तादृशान् रोगिणः कांश्चन आनायितवन्तः, येषां च रोगोपशमनं कर्तुं केनापि वैद्येन न शक्तम् आसीत् । ते सर्वे युवराजप्रकोष्ठस्य पार्श्वे स्थिते प्रकोष्ठे स्थापिताः ।

अनन्तरं राजा शिवदेवम् आनाय्य अपृच्छत् – ''भवान् कपटवैद्यः इति श्रुतम् अस्माभिः । किम् एतत् सत्यम् ? किं जनाः वञ्च्यन्ते भवता ?'' इति ।

तदा शिवदेवः धैर्येण अवदत् – ''महाराज ! मया बहूनां रोगाः निवारिताः । तथापि मम विरोधिनः अपप्रचारं कुर्वन्तः एव सन्ति – अहं कपटवैद्यः इति । तस्मिन् भवता विश्वासः कृतः इति भाति । वस्तुतः मम चिकित्साक्रमः अपूर्वः अस्ति'' इति ।

''किं वचनैः ? भवता स्वस्य वैद्यकीयज्ञानं स्वयं प्रमाणीकरणीयम् । मया केचन रोगिणः आनायिताः सन्ति । तेषां रोगाः निवारणीयाः भवता । यदि तत्र साफल्यं प्राप्यते तर्हि भवान् राजवैद्यः क्रियते । यदि असाफल्यं प्राप्यते तर्हि भवतः मरणदण्डनं विधीयते'' इति अवदत् राजा ।

शिवदेवः मौनेन स्थितवान् । भटाः तं रोगिणां प्रकोष्ठं नीतवन्तः ।

''मया एतैः रोगिभिः सह एकान्ते सम्भाषणं करणीयम् । अतः भवन्तः इतः गच्छन्तु'' इति भटान् उक्तवान् शिवदेवः ।

भटाः ततः निर्गताः । भटानां निर्गमनस्य अनन्तरं द्वारं कीलितवान् शिवदेवः । वराकः सः न जानाति स्म यत् पार्श्वप्रकोष्ठे



राजकुमारः अस्ति इति ।

सः रोगिणः उद्दिश्य – ''अहम् अस्मि राजवैद्यादपि श्रेष्ठः । अतः एव युवराजस्य चिकित्सार्थम् अहम् अत्र आनायितः अस्मि महाराजेन । आदौ भवतां चिकित्सां कृत्वा महाराजस्य साधुवादं श्रोतुम् इच्छन् अहम् अत्र आगतः । भवतां सर्वेषां रोगं निवारयितुं समर्थं रामबाणायमानम् औषधं मत्समीपे अस्ति । तत् हृदयरसेन मेलयित्वा लेप्यं सज्जीकरणीयं मया । त्रिवारं तेन शरीरं लिप्तं चेत् स्वास्थ्यं प्राप्यते । भवत्सु यस्य अस्वास्थ्यम् अधिकम् अस्ति सः मरणार्थं सज्जः भवतु'' इति उक्त्वा एकस्य रोगिणः समीपं गतवान् ।

तदा सः रोगी भीतः । ''मम किम् अस्वास्थ्यम् ? अहं तु नितरां स्वस्थः । मया

निषिध्यमाने अपि मद्गृहजनाः वृथा चिकित्सां कारयन्तः आसन् । मां तु न कोऽपि रोगः बाधते'' इति उक्त्वा उत्थाय वेगेन धावन् ततः निर्गतवान् ।

तस्य निर्गमनस्य अनन्तरम् अपरः रोगी उत्थाय - ''ममापि न किमपि अस्वास्थ्यम् । अहं स्वस्थोऽस्मि'' इति वदन् ततः निर्गतः । एवम् एव सर्वे रोगिणः ततः निर्गताः।

एतत्सर्वं दृष्ट्वा राजा आश्चर्यचकितः । प्रकोष्ठे किं प्रवर्तमानम् अस्ति इति ज्ञातुम् इच्छन् सः मन्त्रिप्रभृतिभिः सह प्रकोष्ठं प्रविष्टवान् । तत्र शिवदेवः एकः एव उपविष्टः आसीत् । अत्रान्तरे राज्ञा पार्श्व-प्रकोष्ठस्थेन युवराजेन कृतः महान् हासः श्रुतः । राजा आश्चर्यम् अनुभवन् युवराज-समीपं गत्वा - ''वत्स ! अपि स्वस्थः भवान् ? चिरकालानन्तरं मया भवतः हासः श्रुतः । किं भवतः अस्वास्थ्यम् अपगतम् ?'' इति अपृच्छत् ।

''मम किम् अस्वास्थ्यम् ? अहं तु पूर्णरूपेण स्वस्थः एव'' इति उक्त्वा पुनरपि हसितवान् राजकुमारः ।

राजकुमारस्य मुखात् राजा प्रवृत्तं समग्रं श्रुतवान् । कपटः वैद्यः तु म्लानमुखः सन् - 'अद्य मम शिरच्छेदः निश्चितः' इति चिन्तयन् आसीत् ।

तदा राजा तम् उक्तवान् - ''भवान् वैद्यशास्त्रं किञ्चिदपि न जानाति । तथापि भवन्तं क्षान्तवान् अस्मि । इतःपरं भवान् वैद्यवृत्तिं परित्यज्य अस्माकम् आस्थाने विदूषकपदे तिष्ठतु । युवराजादयः यदा खिन्नाः भवन्ति तदा तेषां मनसः प्रसादनं भवतः कार्यम्'' इति ।

एवं शिवदेवः राजास्थाने विदूषकः जातः । 'मया वैद्यविद्या न ज्ञायते' इति अङ्गीकुर्वता तेन वैद्यवृत्तिः परित्यक्ता । काश्चन ग्राम्यचिकित्साः सः जानाति स्म । ताः अवलम्ब्य सः जनान् हासयन् कांश्चन रोगमुक्तान् कृतवान् आसीत् पूर्वम् ।

शिवदेवस्य विदूषकपदस्वीकारस्य अनन्तरं राजास्थाने सर्वदा उत्साहः एव दृश्यते स्म । राजकुमारः अपि सर्वदा हसन्मुखः भवति स्म । 'हासः अपि औषधायते' इति ततः सर्वे अवगतवन्तः ।





# विश्वासानर्हं कार्यम्

प्राचीनकालस्य कथा एषा । जपानदेशे कश्चन भूस्वामी निवसति स्म । पितृपरम्परातः प्राप्ता अपारा सम्पत्तिः आसीत् तस्य । अतः भूस्वामी पूर्वजानां स्तुतिं सर्वदा कुर्वन् कालं यापयति स्म । यद्यपि बहूनि कार्याणि कर्तुं, महाकार्याणि साधयितुं च तस्य सामर्थ्यम् आसीत्, तथापि किमपि न करोति स्म सः । प्रत्युत, पूर्वजानां स्तुतिगीतानि गायन् आनन्देन दिनानि यापयति स्म ।

केचन स्वार्थसाधकाः भूस्वामिनः एतस्याः प्रवृत्तेः लाभं स्वीकर्तुम् उद्युक्ताः अभवन् । ते अपि भूस्वामिनः पूर्वजानां प्रशंसां कुर्वन्ति स्म । कश्चित् वदति स्म - ''भवतः पिता महाराजम् एव जितवान् आसीत् । भवतः पितुः पुरतः महाराजः हतप्रभः भवति स्म'' इति । अपरः वदति स्म - ''भवतः पितामहः पाण्डित्येन महापण्डितम् एव पराजितवान् आसीत्'' इति । अन्यः वदति स्म - ''भवतः प्रपितामहः तावत्सुन्दरः आसीत् यत् तं परिणेतुम् अप्सराः अपि अहमहमिकया अग्रे आगच्छति स्म । तदेव सौन्दर्यं भवतः मुखमण्डले अपि विलसति । यदि काचित् अप्सराः भवतः परिणयार्थम् आगच्छति तर्हि न तत्र आश्चर्यम्'' इति ।

''आम्, भवद्भिः युक्तम् एव उक्तम् । अस्माकं पूर्वजाः सर्वज्ञाः आसन् इति प्रपञ्चः एव जानाति । तैः अकृतं किमपि कार्यं प्रायः न स्यात् । सर्वशक्तिशालिनः आसन् ते'' इति वदति स्म भूस्वामी ।

एवम् एव दिनानि गतानि । एकदा भूस्वामी आत्मानं परितः उपविष्टान् उद्दिश्य अवदत् - ''मम पूर्वजैः कर्तुम् अशक्तं कार्यं

*'जपानदेशीया जानपदकथा'*

किमपि किं भवन्तः निर्देष्टुं शक्नुवन्ति ? यः तथा निर्दिशति तस्मै शतं सुवर्ण-नाणकानि दीयन्ते'' इति ।

तत्र उपविष्टेषु कोऽपि तादृशं कार्यविशेषं निर्देष्टुं न शक्तवान् । सर्वे मौनेन स्थितवन्तः आसन् ।

तत्समये कश्चन निर्धनः कृषिकः तत्र आगतः । तस्य क्षेत्रे या सस्यवृद्धिः जाता तस्याः निमित्तम् एकरजतनाणकमितं करं विहितवान् आसीत् भूस्वामी । 'एतत् अन्याय्यम्' इति भूस्वामिनं निवेदितवान् सः कृषिकः ।

''एकस्य रजकनाणकस्य कृते एतावान् कोलाहलः क्रियते खलु भवता ! शतं सुवर्णनाणकानि एव अहं दास्यामि भवते । किन्तु तदर्थं भवता मत्पूर्वजैः कृतं तादृशम् एकं महाकार्यं वक्तव्यं, यत्र च अहं विश्वासं न कुर्याम् । किम् एतत् शक्यते भवता ?'' इति पृष्टवान् भूस्वामी ।

''अवश्यं तादृशं कार्यं वदिष्यामि अहम् । प्रायः तादृशं कार्यम् अन्येन भूस्वामिना, राज्ञा वा कृतं न स्यात्'' इति विश्वासेन उक्तवान् कृषिकः ।

तदा आश्चर्यम् अनुभवन् भूस्वामी अवदत् - ''भवता उच्यमानं महाकार्यं स्यात् । विश्वासानर्हं च स्यात्'' इति ।

''अनुमन्यते मया'' इति उक्तवान् कृषिकः ।

''तर्हि तत् कार्यं किम् इति विवृणोतु'' इति सूचितवान् भूस्वामी ।

''भवतः पितामहस्य प्रपितामहः महाजनः आसीत् । एकदा सः शिबिकायाम् उपविश्य दूरस्थम् एकं मन्दिरं गतवान् । मध्याह्नसमये तेन एकं वनं प्राप्तम् । विश्रान्त्यर्थं सः शिबिकातः अवतीर्णः । कस्यचित् वृक्षस्य अधः उपविष्टवान् च । तदा कश्चन पथिकः अवदत् - 'एतस्मिन् वृक्षे असङ्ख्याः पक्षिणः वसन्ति । तेषु कोऽपि पक्षी विष्ठापातनेन भवतः वस्त्रं मलिनं कुर्यात् । अतः अन्यत्र भवतः उपवेशनं वरम्' इति । एतत् श्रुत्वा कोपेन सः भूस्वामी अवदत् - 'अहम् अस्मि



भूस्वामी । किं पक्षिभ्यः भीतेन मया अन्यत्र गन्तव्यम् ? सर्वथा असम्भवम् एतत् । अहम् इतः न अपसरामि' इति ।''

''मम पितामहस्य प्रपितामहेन युक्तम् एव उक्तम् । अस्मद्वंशराजाः स्वतन्त्र-प्रवृत्तिमन्तः । ते अन्यस्य आदेशं कथं वा पालयेयुः ?'' इति उक्तवान् भूस्वामी ।

कृषिकः कथनम् अनुवर्तितवान् - ''अल्पे एव काले केनचित् पक्षिणा तस्य युतकस्य उपरि विष्ठा पातिता । तदा सः सेवकद्वारा अन्यत् युतकम् आनाय्य धृतवान् । पुनः अपरः पक्षी तस्य राङ्कवस्य उपरि विष्ठाम् अपातयत् । तदा भूस्वामी सेवकम् आदिष्टवान् यत् एतत् राङ्कवं क्षिप्त्वा अपरम् आनयतु इदि ।''

''एतादृशः व्यवहारः अस्मद्वंशजानां सहजः । तेषां प्रवाससमये महती वस्त्र-पेटिका अपि नीयते स्म एव सेवकैः'' इति सगर्वम् उक्तवान् भूस्वामी ।

कृषिकः पुनरपि कथनम् अनुवर्तितवान् - ''किञ्चित्कालानन्तरम् अपरः पक्षी विष्ठाम् अपातयत् । सा पादरक्षायाः उपरि पतिता । भूस्वामी कोपेन तां पादरक्षां क्षिप्त्वा सेवकान् कटाक्षेण दृष्टवान् । सेवकाः झटिति अन्यां पादरक्षाम् आनीत-वन्तः'' इति ।

''स तु मत्पूर्वजः खलु ? तस्य एतादृशः व्यवहारः न असम्भवः'' इति उक्तवान् भूस्वामी ।

कृषिकः पुनः अवदत् - ''तदनन्तरम् अन्यः पक्षी विष्ठाम् अपातयत् । सा भूस्वामिनः शिरसि पतिता । तदा भूस्वामी आज्ञापितवान् यत् मम एतत् शिरः कर्तयित्वा अन्यत् शिरः आनीय योजयन्तु'' इति ।

''सर्वथा असम्भवम् एतत् । मत्पूर्वजः कश्चित् एवम् उक्तवान् इत्यत्र सर्वथा न विश्वसिमि अहम्'' इति क्रोधेन उक्तवान् भूस्वामी ।

''अनुगृहीतोऽस्मि प्रभो ! मया जयः प्राप्तः । पारितोषिकं दीयताम्'' इति उक्त्वा कृषिकः सन्तोषेण कूर्दितवान् । तत्र सम्मिलिताः सर्वे हसन्तः करताडनं कृतवन्तः ।

कृषिकः भूस्वामितः पारितोषिकधनं प्राप्य तं नमस्कृत्य ततः निर्गतवान् ।



# एतन्मासे जातः महापुरुषः

## शङ्करः

शङ्करवर्येण भारते अन्यदेशेषु च प्राप्तासु प्रशस्तिषु 'आर्डर् आफ् स्मैल्' इत्येषा एव अतिविशिष्टा, या च पोलेण्ड्देशीयैः बालैः प्रदत्ता । ते १९७७ तमे वर्षे एतस्याः प्रशस्त्याः निमित्तम् अन्ताराष्ट्रियबालस्पर्धायाः आयोजकं शङ्करवर्यं चितवन्तः । एषा प्रशस्तिः वैभवोपेते समावेशे यदा प्राप्ता तदा बालाः शङ्करतः वाग्दानं प्राप्तवन्तः यत् मया बालानां सन्तोषार्थं कार्यं क्रियते इति ।

शङ्करपिळ्ळेवर्यः १९०२ तमे वर्षे जुलैमासस्य ३१ तमे दिनाङ्के ट्रावन्कोर्नगरे जन्म प्राप्तवान् । यस्मिन् कुटुम्बे सः जातः तस्मिन् मातुः प्राधान्यं भवति स्म । अतः सः मात्रा, मातामह्या, मातुलेन च सह वासं कृतवान् । सः मातुः एकमात्रपुत्रः आसीत् । अतः पक्षिणः, चित्रपतङ्गाः च तस्य सहचराः आसन् ।

तस्य विद्यालये तदीयः गणिताध्यापकः कदाचित् कासाञ्चित् गणितसमस्यानां परिहारार्थं छात्रान् आदिश्य उत्पीठिकायाः उपरि पादौ संस्थाप्य आसन्दे उपविश्य निद्रायां मग्नः अभवत् । तस्मिन् दिने शङ्करवर्येण स्वस्य प्रथमं व्यङ्ग्यचित्रं लिखितम् ।

१९२६ तमे वर्षे सः मुम्बयीनगरे पदवीपर्यन्तम् अधीत्य व्यङ्ग्यचित्रलेखनप्रवृत्तिं वर्धितवान् । तस्य प्रथमं व्यङ्ग्यचित्रं दिनपत्रिकायां प्रकाशितं १९३२ तमे वर्षे । यदा 'दि हिन्दुस्तान् टैम्स्' पत्रिकाकार्यालये उद्योगित्वेन नियुक्तिः प्राप्ता तदा 'प्रथमः व्यङ्ग्यचित्रलेखकोद्योगी' इति कीर्तिः निरायासं प्राप्ता तेन ।

भारतं यदा स्वातन्त्र्यं प्राप्नोत् तदा सः भारतस्य अद्वितीयां व्यङ्ग्यचित्रपत्रिकां 'शङ्कर्स् वीक्ली'नामिकाम् आरब्धवान् । १९४८ तमे वर्षे मे-मासे तस्याः पत्रिकायाः प्रथमसञ्चिकायाः उद्घाटनं कुर्वन् प्रधानमन्त्री अवदत् - ''शङ्करवर्य ! मां चित्रविषयीकरणात् मा दूरीकरोतु'' इति । अतः एव इति भाति, ततः आरभ्य १९६४ तमवर्षसमाप्तितः पूर्वं शङ्करवर्यः नेहरूवर्यम् अधिकृत्य सार्धैकसहस्राधिकानि चित्राणि प्रकाशितवान् स्वपत्रिकायाम् ।

१९४९ तमे वर्षे सः स्वपत्रिकायां प्रकाशितवान् यत् बालैः चित्राणि प्रेषणीयानि इति । प्रथमा 'बालसञ्चिका' प्रकाशिता डिसेम्बर्मासे । अनन्तरवर्षे त्रयोदशदेशेभ्यः चित्राणि आगतानि । एतस्याः अन्ताराष्ट्रियस्पर्धायाः ५२ वर्षाणि अतीतानि सन्ति इदानीम् । शङ्करवर्यः १९५० तमे वर्षे बालचित्राणां प्रदर्शिनीम् आयोजितवान् । बालेषु आत्मविश्वासं पूरयितुं तेन एवं कृतम् । समानस्थले चित्र-लेखनस्पर्धा अपि तेन आयोजिता देहल्याम् । एषा स्पर्धा देहल्यां प्रातिवार्षिकी संवृत्ता ।

बालपुस्तकमण्डलीं स्थापयितुं तेन नवदेहल्यां पञ्चाट्टात्मकं नेहरूभवनं निर्मापितम् । तया संस्थया विविधभाषामयानि शताधिकपुस्तकानि प्रकाशितानि सन्ति । बालेषु निहितं कलाकौशलं लेखनकौशलं च प्रोत्साहयितुं सः 'बालप्रपञ्चः' (चिल्ड्रन्स् वर्ल्ड्) इत्येतां पत्रिकाम् अपि आरब्धवान् १९६८ तमे वर्षे । तस्यां बहवः पुटाः बालानां सर्जनात्मकप्रतिभायाः प्रोत्साहनार्थं विनियुज्यन्ते स्म । १९६५ तमे वर्षे बालानां निमित्तम् एव ग्रन्थालयं वाचनालयं च आरब्धवान् सः ।

कदाचित् तेन हङ्गरीदेशाय सालङ्कृतपाञ्चालिकाः प्रेषिताः । ततः आरभ्य तादृशीः विभिन्नपाञ्चालिकाः सङ्ग्रहीतुं सः उद्युक्तः जातः । नेहरूभवने अन्ताराष्ट्रिय-पाञ्चालिकासङ्ग्रहालयः आरब्धः । तत्र शताधिकदेशेभ्यः सङ्गृहीताः अष्टसहस्राधिकाः (८०००) पाञ्चालिकाः प्रदर्शनार्थं स्थापिताः । एतादृशः प्रदर्शनालयः प्रपञ्चे एव अद्वितीयः ।

शङ्करवर्यः १९८९ तमे वर्षे डिसेम्बर्मासस्य २६ तमे दिनाङ्के दिवङ्गतः । बालानां मुखे मन्दहासस्य विलासार्थं तेन प्रयासः कृतः । तत्र सः सफलः इत्यत्र नास्ति खलु अतिशयोक्तिः ?





# निर्भयः

कस्मिंश्चित् घनारण्ये जगदम्बा नाम मन्त्रवादिनी निवसति स्म । सा क्रूर-स्वभावा । अरण्यमार्गेण गच्छतः जनान् भाययित्वा मारयित्वा च सन्तोषम् अनुभवति स्म सा । तस्याः गुहा मृतानाम् अस्थिपञ्जरैः पूर्णा आसीत् । तेषां मध्ये शयनात् एव सा सुखनिद्रां प्राप्नोति स्म।

तस्य अरण्यस्य समीपे स्थिते ग्रामे निवसन्तं रमानाथनामकं कदाचित् जगदाम्बा मारितवती आसीत् । अतः तस्य ग्रामस्य जनाः अरण्यदिशि दृष्टिपातमपि न कुर्वन्ति स्म ।

रमानाथस्य अनुजः सुधीरः । ग्रामजनाः तद्विषये वदन्ति स्म यत् एतादृशः निर्भीकः युवकः अस्माभिः कुत्रापि न दृष्टः इति । एकदा सुधीरः निर्णीतवान् यत् मया जगदम्बायाः प्राणाः अपहरणीयाः इति । अतः सः कमपि अनुक्त्वा अरण्यं गतवान् ।

यदा सः जगदम्बायाः वासस्थलं प्राप्तवान् तदा सा विशालस्य वटवृक्षस्य अधः उपविष्टवती आसीत् । एषु दिनेषु तया कोऽपि मानवः प्राप्तः न आसीत् । चिरकालानन्तरम् उपस्थितं कञ्चित् मानवं दृष्ट्वा सा नितरां सन्तुष्टा ।

सुधीरः तस्याः समीपं गत्वा अपृच्छत् - ''अम्ब ! कुशलिनी खलु भवती ?'' इति ।

''आम् । अतः एव खलु अत्र सुखेन उपविशामि ? तदस्तु वत्स ! कुत्र गमनं भवतः ?'' इति उपहासपूर्वकं पृष्टवती जगदम्बा ।

''मम नाम सुधीरः इति । गुरुकुले मया सर्वाः विद्याः अधीताः । किन्तु भयं नाम कीदृशम् इति अद्यावधि न ज्ञातम् एव मया । अतः भयस्य परिचायकः कोऽपि लभ्येत वा इति पश्यन् सर्वत्र अटन् अस्मि'' इति सहजस्वरेण उक्तवान् सुधीरः ।



''एवम् ! एवं तर्हि योग्यं स्थलं प्राप्तम् अस्ति भवता । अचिरात् एव भयं परिचाय्य परलोकं प्रेषयिष्यामि भवन्तम्'' इति अट्टहासं कुर्वती उक्तवती जगदम्बा ।

''परलोकं प्रति किमर्थं गन्तव्यं मया ? किं तत्र भयस्य परिचयः भवेत् ? अहं तु तत्र गन्तुं सिद्धः अस्मि एव । मया श्रुतम् आसीत् यत् भवत्याः रूपं भयजनकम् इति । किन्तु भवती तु परमसुन्दरी अस्ति । अलौकिकं सौन्दर्यं विलसति भवत्याः मुखे । श्वेताः केशाः, दीर्घा नासिका विशाले नेत्रे च भवत्याः सौन्दर्यस्य वर्धकाः सन्ति । एतत् सौन्दर्यं निश्चयेन वर्णनातीतम्'' इति प्रशंसां कृतवान् सुधीरः ।

तदा जगदम्बा सन्तुष्टा सती पृष्टवती - ''किं सत्यम् उच्यते भवता ? किम् अहं वस्तुतः अपि सुन्दरी अस्मि ?'' इति ।

''मम वचने विश्वासः नास्ति चेत् भवती दर्पणे स्वयं पश्यतु'' इति वदन् स्यूततः एकं दर्पणं निष्कास्य दर्शितवान् सुधीरः । जगदम्बा दर्पणे स्वस्य मुखं दृष्ट्वा नितराम् आश्चर्यचकिता । ''वत्स ! भवता उक्तं युक्तम् एव । बहूनां वर्षाणाम् अनन्तरं मया वस्तुस्थितिः अवगता अस्ति । आगच्छतु वत्स ! मधुरं खादयिष्यामि'' इति आनन्देन हसन्ती उक्तवती जगदम्बा ।

''मधुरस्य खादनम् अनन्तरम् । आदौ मां भाययतु तावत् । मयि भयम् उत्पादयितुं भवत्याः सामर्थ्यम् अस्ति वा न वा इति पश्यामि तावत्'' इति उक्तवान् सुधीरः ।

''रे, यदि अहं भाययेयं तर्हि भवान् प्राणैः वियुक्तः भवेत् । मम सौन्दर्यं प्रशंसितवन्तं भवन्तं मारयितुं मम इच्छा नास्ति'' इति उक्तवती जगदम्बा ।

''मयि भयम् उत्पादयितुं सामर्थ्यं नास्ति भवत्याः । अतः एव एवं वदति भवती । इतः परम् अत्र स्थित्या किं प्रयोजनम् ? एषोऽहं गच्छामि तावत्'' इति वदन् ततः निर्गन्तुम् उद्युक्तः अभवत् सुधीरः ।

''भोः, अलं गमनेन । मया सह आगच्छतु तावत्'' इति वदन्ती जगदम्बा तं गुहायाः अन्तः नीतवती ।

तत्र गतः सुधीरः अस्थ्नां राशिम् एव दृष्टवान् । 'एतेषु मम सहोदरस्यापि अस्थीनि स्युः' इति चिन्तयन् सः क्षणकालं नेत्रे निमीलितवान् ।

तदा जगदम्बा हसन्ती उक्तवती - ''भोः,

एतेषु कस्मैचिदपि मया न विषं दत्तं, न वा बाणप्रयोगः कृतः । बुद्धिमन्तः सङ्केतमात्रेण वस्तुस्थितिम् अवगच्छन्ति इति श्रूयते । भवान् बुद्धिमान् । अतः एतस्य सर्वस्यापि दर्शनात् एव भवान् अवगतवान् स्यात् यत् अहं कीदृशी मन्त्रवादिनी इति । एतेषाम् अस्थ्नां दर्शनात् एव भवान् मम सामर्थ्यम् अवगतवान् स्यात् खलु ?'' इति ।

''एते कोमलहृदयाः स्युः । भीरवः अपि स्युः । अहं न तादृशः । मम तु हृदयं सिंहस्य इव सुदृढम्'' इति उक्तवान् सुधीरः ।

एतत् श्रुत्वा क्रुद्धा जगदम्बा - ''मरणम् एव आलिङ्गितुम् इच्छन्तं को वा रक्षेत्'' इति वदन्ती कमपि मन्त्रं जपितवती ।

अनन्तरक्षणे सा व्याघ्रमुखी पक्षिकाया च जाता । सा नखमयेन पादेन सुधीरं गृहीत्वा आकाशे डयनम् आरब्धवती । किञ्चित्कालं तं भ्रामयित्वा भूमिम् आगता सा कमपि मन्त्रं पठित्वा पूर्वतनं रूपं प्राप्तवती ।

सुधीरः तु यथापूर्वम् आसीत् । तस्य मुखे भयस्य चिह्नम् अपि न आसीत् । न सः प्राणरक्षणार्थं प्रयत्नं कृतवान्, न वा पराजयम् अङ्गीकृतवान् । तस्य साहसशीलतां दृष्ट्वा आश्चर्यचकिता जगदम्बा उक्तवती - ''भवान् इतोऽपि जीवति ! मया चिन्तितम् आसीत् - भवान् मृतः स्यात् इति'' इति ।

''मरणसम्भावना कथम् ? भवती आकाशे विहारं कारितवती यत् ततः मया महान् सन्तोषः अनुभूतः । धन्यवादाः भवत्यै'' इति उक्तवान् सुधीरः ।



तस्य वचनं श्रुतवत्याः मन्त्रवादिन्याः कोपः नितरां प्रवृद्धः । सा अपरस्य मन्त्रस्य जपम् आरब्धवती ।

तदा सुधीरः ताम् उपहसन् उक्तवान् - ''भवत्याः समीपे मन्त्राणां ग्रन्थिः एव स्यात् । तथापि भवती मां गतप्राणं कर्तुं तु न शक्तवती । पुनरपि प्रयत्नः क्रियताम् । यदि इदानीम् अपि भवत्याः एव पराजयः तर्हि भवती माम् एकं मन्त्रं बोधयेत् । किम् एषः नियमः अङ्गीक्रियते भवत्या ?'' इति ।

जगदम्बा एतं नियमम् अङ्गीकृत्य अस्थिपञ्जररूपं प्राप्तवती । तस्याः शरीरतः असङ्ख्याः घोरसर्पाः निर्गताः । तथापि सुधीरः न भीतः । सः हसन् एव अवदत् - ''अम्ब ! पराजयः भवत्याः । इदानीं भवती मां कञ्चित् मन्त्रं पाठयेत्'' इति ।

''भवतः मनः पाषाणखण्डायते'' इति वदन्ती पूर्वतनरूपं प्राप्तवती जगदम्बा ।

क्षणकालं विचिन्त्य सा - ''अस्तु, भवन्तम् एकं मन्त्रं बोधयिष्यामि । मन्त्रवादिन्यः वचनपालिकाः इत्येतत् निरूपयिष्यामि'' इति उक्त्वा सुधीरम् एकं मन्त्रम् उपदिष्टवती ।

तदा सुधीरः कोपेन अवदत् - ''एषः मन्त्रः वृश्चिकात् रक्षेत् । एतादृशस्य अल्पस्य मन्त्रस्य ज्ञानतः मम कः लाभः ?'' इति ।

''अये अविवेकिन् ! भवादृशं किं महामन्त्रम् उपदिशेयम् ?'' इति कोपेन एव पृष्टवती जगदम्बा ।

''अम्ब ! मम पितामही वदति स्म - मन्त्रवादिन्यः यत्किमपि रूपं धर्तुं शक्नुवन्ति, किन्तु न कदापि वृश्चिकरूपम् इति । भवती वृश्चिकरूपं प्राप्तुं न शक्नुयात् खलु ? '' इति अवदत् सुधीरः ।

एतत् श्रुत्वा नितरां क्रुद्धा जगदम्बा - ''अहो, कियत् धाष्टर्यं भवतः ! मम सामर्थ्यातिशयविषये एव भवतः सन्देहः !! किं भवान् मां सामान्यां मन्यते ? पश्यतु मम सामर्थ्यम्'' इति वदन्ती वृश्चिकरूपं धृत्वा सुधीरं दंष्टुम् आगता ।

तावता सुधीरः तया एव बोधितं वृश्चिकनिवारणमन्त्रं जपित्वा आत्मानं रक्षितवान् । तथैव झटिति पादाभ्यां तं वृश्चिकं मारितवान् च ।

विजयं प्राप्य सुधीरः नितरां सन्तुष्टः । तावता अस्थिपञ्जररूपं गताः सर्वे जीवधारणं कृत्वा समूहरूपेण गुहातः बहिः आगताः । तेषु सुधीरस्य अग्रजः अपि आसीत् । तं दृष्ट्वा सुधीरः महता आनन्देन आलिङ्गितवान् । अग्रजः भयेन इतस्ततः पश्यन् उक्तवान् - ''अत्र क्वचित् मन्त्रवादिनी निलीय स्थिता स्यात् । वयं शीघ्रं निर्गच्छाम'' इति ।

तदा सुधीरः मृतं वृश्चिकं प्रदर्श्य - ''एषा एव मन्त्रवादिनी । न जीवति इदानीं सा'' इति अवदत् । प्रवृत्तं सर्वं सङ्क्षेपेण न्यवेदयत् च । एतेन नितरां सन्तुष्टाः ते सुधीरं स्कन्धे आरोप्य नृत्यन्तः जयघोषं कुर्वन्तः ''सुधीरात् भयम् अपि बिभेति'' इति वदन्तः ग्रामं प्रति प्रस्थितवन्तः ।





# श्वश्र्वाः अस्वास्थ्यम्

रवीन्द्रः यदा पञ्चवर्षीयः आसीत् तदा एव तदीयः पिता दिवङ्गतः । तदारभ्य तस्य माता कल्याणी अनुशासनपूर्वकं पुत्रस्य पालनं पोषणं च कृतवती । रवीन्द्रः अपि मनःपूर्वकं पठन् कस्मिंश्चित् कार्यालये उद्योगं प्राप्तवान् । रवीन्द्राय पुत्रीं दातुं बहवः अग्रे आगताः । वरदक्षिणाम् अपि दातुं सिद्धाः आसन् ते ।

एकदा मन्दिरं गतवती कल्याणी सुधया मिलितवती । तत्र सुधा कल्याणीम् उद्दिश्य – ''कल्याणि ! भवती कदापि वरदक्षिणायाः अपेक्षां मा करोतु । निर्धनकुटुम्बे जाता वधूः एव चेतव्या भवत्या । वरदक्षिणायाः इच्छया अहं भूस्वामिनः पुत्रीं स्नुषात्वेन आनीतवती । तस्य फलम् इदानीम् अनुभवन्ती अस्मि । मम स्नुषा सर्वदा मम उपेक्षां करोति । कटुवचनैः सर्वदा खेदं जनयति'' इति वदन्ती अञ्चलेन अश्रूणि मार्जितवती ।

सुधायाः वचनैः कल्याणी प्रभाविता अभवत् । सख्याः वचनानि सर्वदा तस्याः कर्णे गुञ्जन्ति स्म । एकदा सायं मन्दिरं गतवती कल्याणी मधुरस्वरेण कीर्तनं कुर्वतीं काञ्चित् कन्यां दृष्टवती । तस्याः मुखे विशिष्टा कान्तिः आसीत् । यदा सा कन्या प्रसादं स्वीकृत्य गतवती तदा कल्याणी अर्चकस्य समीपं गत्वा तस्याः कन्यायाः विषये विवरणं पृष्टवती ।

तदा अर्चकः – ''किं भवती तां न जानाति ? भूस्वामिनः गृहे लिपिकाररूपेण कार्यं कुर्वतः गोविन्दवर्यस्य पुत्री सा । गोविन्दः अदृष्टहीनः । तस्य आर्थिकस्थितिः नितरां शोचनीया अस्ति । पुत्र्याः विवाहं कर्तुम् अपि न शक्नोति सः । तस्याः नाम रत्ना'' इति अवदत् ।

'एषा एव मम स्नुषा भवितुं योग्या' इति कल्याण्यै अभासत । तदर्थं स्वयं कल्याणी एव यत्नरता अभवत् । अतः मासाभ्यन्तरे

अनामिका



एव रत्ना-रवीन्द्रयोः विवाहः सम्पन्नः ।

पतिगृहम् आगता रत्ना श्वश्र्वाः चरण-स्पर्शं कृत्वा - ''भवती मम भाग्यदेवता । भवत्याः वचनम् अक्षरशः पालयिष्यामि अहम् । इतःपरं भवती पाकशालायाः दिशि न आगच्छतु । सदा विश्रान्तिसुखम् अनुभवतु । भवत्याः सेवया आनन्दम् अनुभविष्यामि अहम्'' इति अवदत् ।

कल्याणी स्नुषायाः उत्तमगुणेन नितरां प्रसन्ना । तद्दिनतः सा सुखेन जीवनयापनम् आरब्धवती । रत्ना अपि मातरि इव तस्याम् आदरं प्रदर्शयति स्म ।

ततः षण्मासानाम् अनन्तरं कल्याणी अस्वस्था अभवत् । वैद्याः बहुधा परीक्षां कृतवन्तः । किन्तु कल्याण्याः अस्वास्थ्यस्य कारणं तैः न ज्ञातम् एव । उत्थाने उपवेशने चापि महत् कष्टम् अनुभवति स्म सा । सर्वदा तया श्रान्तिः अपि अनुभूयते स्म । शरीरे वेदना अपि भवति स्म इत्यतः सा नितरां दुर्बला जाता । लघुभिः अपि कारणैः सा कोपम् अनुभवति स्म । वैद्याः तस्याः चिकित्सां कर्तुम् अशक्ताः अभवन् ।

कदाचित् सायं श्वासोच्छ्वासकरणे अपि क्लेशम् अनुभवन्ती सा रत्नाम् आहूय अवदत् - ''पौत्रस्य पौत्र्याः वा दर्शनात् पूर्वमेव मम प्राणाः निर्गच्छन्ति इति भाति । मम ललाटे तादृशं भाग्यं लिखितं नास्ति इति मन्ये'' इति ।

तद्दिने रात्रौ रत्ना अश्रूणि स्रावयन्ती पतिम् उद्दिश्य - ''भवतः मातुः कष्टं द्रष्टुं न शक्नोमि । श्वः एव तां नगरं प्रति नीत्वा उत्तमवैद्याय दर्शयतु'' इति उक्तवती ।

परेद्यवि रवीन्द्रः मात्रा सह नगरं गतवान् । तद्दिने सायं रत्नायाः पितृभगिन्याः पुत्रः गिरीशः रत्नया मेलितुम् आगतवान् । रुदती रत्ना श्वश्र्वाः अस्वास्थ्यवार्तां श्रावयित्वा - ''श्वश्र्वा विना अहं जीवितुं न शक्नोमि'' इति अवदत् ।

''कार्यान्तरवशात् नगरं गतवान् आसम् । 'भवती द्रष्टव्या' इति इच्छा अभवत् । अतः अहम् आगतः । भवत्याः श्वश्र्वाः पत्युः च आगमनानन्तरं पुनः आगमिष्यामि । भवत्याः श्वश्र्वाः अस्वास्थ्यं निवारयितुं प्रयत्नं करिष्यामि'' इति उक्त्वा गतवान् गिरीशः ।

दिनद्वयानन्तरं कल्याणी रवीन्द्रः च नगरात् प्रत्यागतौ । तत्रापि वैद्याः सर्वविध-परीक्षाः कृत्वा - 'एषा केनाऽपि रोगेण

ग्रस्ता नास्ति' इति अवदन् ।

तद्दिने सायं गिरीशः तत्र आगतवान् । रत्ना तं प्रार्थितवती - ''मम श्वश्रूं परीक्ष्य किं जातम् अस्ति इति कृपया सूचयतु'' इति ।

गिरीशः कल्याण्याः नेत्रे जिह्वां च परीक्ष्य - ''भवती सदा महतीं श्रान्तिम् अनुभवति खलु ? कस्मिंश्चित् अपि कार्ये रुचिः न स्यात् खलु !'' इति अपृच्छत् ।

तदा कल्याणी - ''आम् ! मञ्चात् अवतीर्य चत्वारि पदानि अग्रे गन्तुम् अपि क्लेशम् अनुभवन्ती अस्मि । भोजनं तु सर्वथा न रोचते । जिह्वायाः रुचिरेव नष्टा अस्ति'' इति अवदत् ।

''भवती शीघ्रं कोपं प्राप्नुवती स्यात् । मनसः समाधानम् अपि न स्यात् खलु । यतः एतस्य रोगस्य लक्षणानि तथैव भवन्ति'' इति उक्तवान् गिरीशः ।

नाडीं परीक्ष्य रोगस्य लक्षणानि कथयन्तं गिरीशम् आश्चर्येण निर्निमेषं पश्यन्ती आसीत् कल्याणी । सा तस्य प्रशंसां कुर्वती - ''भवान् तु पूर्वमेव सर्वम् ज्ञातवान् इव मम रोगलक्षणानि यथावत् कथयन् अस्ति । पुत्र ! मम कोऽपि रोगः नास्ति इत्येव सर्वेषां वैद्यानां मतम्'' इति उक्तवती ।

गिरीशः स्वस्य स्यूतात् सुन्दरम् एकं करण्डकं निष्कास्य कल्याण्यै यच्छन् - ''अस्मिन् करण्डके चूर्णम् अस्ति । प्रतिदिनं द्विवारं किञ्चित् चूर्णं भोजनानन्तरं मुखे स्थापयतु । चूर्णं किञ्चित् एव स्वीकरणीयम् । एतेन सह अन्यत् अपि किञ्चित् करणीयं भवत्या । वाटिकायां स्थितानां



सस्यानां कृते जलसेचनं करणीयम् । शिवमन्दिरं प्रति प्रतिदिनं गन्तव्यं वेगेन । एतत्सर्वं कृतं चेत् सप्ताहाभ्यन्तरे रोगलक्षणानि अदृश्यानि भविष्यन्ति'' इति ।

गिरीशेन दत्तं चूर्णं कल्याणी यथानिर्देशं स्वीकृतवती । सा वाटिकायां कार्यं कृतवती । मन्दिरं प्रति वेगेन गतवती अपि ।

गिरीशस्य सूचनानुसारं रवीन्द्रः एकदा मातरम् - ''अम्ब ! रत्नया कृतः पाकः मह्यं न रोचते । खादनस्य इच्छा एव न भवति । जिह्वायाः रुचिग्रहणसामर्थ्यं नष्टम् अस्ति इति भाति । न्यूनातिन्यूनम् एकवारं वा भवती पाकं करोतु । दिने सकृत् वा सम्यक् भोजनं करोमि'' इति अवदत् ।

पुत्रस्य वचनैः अतीवप्रसन्ना कल्याणी पाकम् आरब्धवती । पक्षाभ्यन्तरे स्वस्थताभावः अनुभूतः तया । क्रमशः सा

क्रियाशीला अभवत् । एकदा सायं कल्याणी मन्दिरं गतवती आसीत् । तदा तत्र आगतः गिरीशः रत्नायाः श्वश्र्वाः स्वास्थ्यविषये विचारितवान् ।

तदा रत्ना अपृच्छत् - ''भवतः औषधेन महत् परिवर्तनं कृतम् । भवान् वैद्यः तु न । तथापि प्रभावशालि औषधं दातुं कथं भवान् समर्थः अभवत् ? तस्याः रोगस्य निदानं कथं ज्ञातं भवता ?'' इति ।

तदा उच्चैः हसन् अवदत् गिरीशः - ''अहं वैद्यशास्त्रं न अधीतवान्, किन्तु मानवानां मनसः भावनाः सम्यक् एव अवगच्छामि । रोगिणः रोगस्य अपगमने वैद्ये विश्वासः प्राधान्यम् आवहति । 'एषः वैद्यः निश्चयेन मम रोगं दूरीकरिष्यति' इति भावः रोगिणः मनसि स्यात् । अहं भवत्याः श्वश्र्वाः मनसि एतादृशभावस्य जागरणं कारितवान् । अतः एव लक्ष्यप्राप्तौ सफलः अभवम् । भवत्याः श्वश्रूः केनाऽपि रोगेण पीडिता नास्ति । तस्याः रोगः मानसिकः । एकमात्रस्य पुत्रस्य विवाहकारणेन सामान्यतः सर्वाः अपि एतादृशरोगेण ग्रस्ताः भवन्ति । 'गृहे इतः परम् अस्माकम् आवश्यकता समाप्ता, पुत्रः हस्तच्युतः अभवत्' इति ताः चिन्तयन्ति । तादृश्यः आत्मानं रोगग्रस्तां भावयन्ति । मया दत्ते औषधे शर्करया सह मिश्रितं पिष्टमात्रम् आसीत् । इतःपरं कदापि 'विश्रान्तिम् अनुभवतु' इति श्वश्रूं भवती मा वदतु । उभे अपि मिलित्वा कार्यं कुरुताम् । सर्वदा भवती तां पृष्ट्वा एव कार्यं करोतु । 'मम अत्र नितान्तम् आवश्यकता अस्ति' इति अनुभवः तया प्राप्तव्यः । अतः तदनुसारं भवती व्यवहारं करोतु । तदा एव सा क्रियाशीला स्थास्यति'' इति ।

देहल्याः उपरि स्थित्वा गिरीशस्य वचनानि श्रुतवान् रवीन्द्रः - ''भवतः उपकारः सर्वदा स्मर्यते मया । मात्रे भवान् नूतनं जन्म दत्तवान् इव'' इति उक्त्वा स्नेहेन गिरीशस्य हस्तौ गृहीतवान् ।



६४. धृतराष्ट्रस्य मरणम्

# महाभारतम्

धृतराष्ट्रः अतिथिभ्यः महता आदरेण कन्द-मूल-फलानि समर्पितवान् । अतिथीनां वासार्थम् उत्तमं प्रबन्धं कारितवान् । तद्दिने रात्रौ पाण्डवाः मातरं परितः शयनं कृतवन्तः ।

परेद्यवि ते सर्वे महिलाभिः, पुरोहितवर्गेण च सह समीपस्थानि प्रेक्षणीयानि आश्रमस्थलानि द्रष्टुं गतवन्तः । तत्र तैः यज्ञकुण्डानि दृष्टानि । कुण्डेषु अग्निः ज्वलति स्म । यज्ञकुण्डस्य पुरतः उपविश्य मुनयः होमकरणे निमग्नाः आसन् । तत्र अनेकविधाः प्राणिनः, विविधाः पक्षिणः च स्वेच्छया विहरन्ति स्म । पाण्डवाः आश्रमे अटनं कृतवन्तः । अन्ते सर्वे सन्तुष्टाः सन्तः धृतराष्ट्रस्य समीपं प्रतिगतवन्तः ।

तदा एव व्यासमहर्षिः शिष्यैः सह तत्र उपस्थितः अभवत् । सः धृतराष्ट्रम् अवदत् - ''राजन् ! वनवासः सुखप्रदः अस्ति खलु । पुत्रशोकेन भवान् व्यथितः तु नास्ति खलु ? भवतः कारणतः गान्धारी कष्टं तु अनुभवन्ती नास्ति खलु ? कुन्त्या भवतोः सेवा क्रियमाणा अस्ति खलु ? अत्र भवतः कष्टं किमपि नास्ति इति भावयामि'' इति ।





अनन्तरं व्यासः विदुरस्य जन्मवृत्तान्तस्य रहस्यं श्रावितवान् - ''विदुरः एव वास्तवतया युधिष्ठिरः । माण्डवमुनेः शापस्य कारणतः यमराजः विदुरजन्म प्राप्तवान् । स एव यमराजः स्वस्य योगबलेन युधिष्ठिरे ऐक्यम् आप्नोत् । तदर्थं सः स्वस्य योगबलस्य उपयोगं कृतवान्'' इति ।

पाण्डवाः परिवारजनैः सह तस्मिन् आश्रमे मासं यावत् वासं कृतवन्तः । पुनः एकदा व्यासमहर्षिः तत्र आगतवान् । अनेकाः कथाः उक्त्वा सर्वेषां मनोरञ्जनं कृतवान् । अत्रान्तरे नारदः, पर्वतः, देवलः, विश्वावसुः, तुम्बुरः, चित्रसेनश्च तत्र आगतवन्तः । युधिष्ठिरः सर्वेषाम् उचितम् आदरसत्कारं कृतवान् । तदा तत्र व्यासः, अन्ये अतिथयः, पाण्डवाः, धृतराष्ट्रः, गान्धारी, कुन्ती, द्रौपदी, सुभद्रा इत्यादयः आगत्य उपविष्टवन्तः । प्राचीनानां महर्षीणां, देवानाम्, असुराणां च कथाः श्रुताः श्राविताः च ।

एकदा धृतराष्ट्रः व्यासमहर्षिम् उद्दिश्य स्वस्य हृद्गतम् अवदत् - ''भवतः आगमनेन मम जन्म सफलम् अभवत् । परलोकस्य विषये मम सर्वथा भयं नास्ति । किन्तु मम एका एव चिन्ता अस्ति । युद्धे मृताः मम पुत्राः पौत्राः च कीदृशं लोकं प्राप्तवन्तः इति अहं न जानामि । अहर्निशम् एषा चिन्ता मां बाधते । अतः मम मनः अशान्तम् अस्ति'' इति ।

धृतराष्ट्रस्य मुखतः यदा एतादृशानि वचनानि निर्गतानि तदा गान्धारी दुःखं सोढुम् अशक्ता । तया सह कुन्ती, द्रौपदी, सुभद्रा, इतरस्त्रियः चापि रोदनं कृतवत्यः ।

गान्धारी साञ्जलिः व्यासं प्रणम्य अवदत् - ''मम पुत्राणां मरणानन्तरं षोडश वर्षाणि अतीतानि । तदारभ्य मम पतिः अहर्निशं तेषां निमित्तं विलपन् अस्ति । द्रौपदी अपि स्वस्य भ्रातृणां पुत्राणां च स्मरणं कुर्वती रोदिति । सुभद्रा अभिमन्योः निमित्तं रोदिति । भूरिश्रवसः पत्नी श्वशुरस्य, पत्युः, पुत्राणां च मरणकारणतः रोदिति । एतेषां सर्वेषां दुःखनिवारणस्य कोऽपि उपायः अस्ति चेत् सूचयतु'' इति ।

व्यासः कुन्तीम् अपृच्छत् - ''भवत्याः मनसि किमपि दुःखम् अस्ति किम् ?'' इति ।



सा अवदत् - ''अहं कर्णनिमित्तं विलापं कुर्वती अस्मि'' इति ।

तदा व्यासः गान्धारीम् अवदत् - ''भवती स्वपुत्रं बान्धवान् च द्रक्ष्यति । कुन्तीदेवी कर्णं, सुभद्रा अभिमन्युं, द्रौपदी पितरं भ्रातॄन् पुत्रान् च द्रक्ष्यति । मम मनसि पूर्वमेव एषः विचारः आसीत् । भवत्या कुन्त्या चापि सः एव विचारः प्रकटितः । भवत्या कस्मिंश्चित् अपि विषये दुःखितया भवितव्यं नास्ति । महाभारतयुद्धे ये मृताः ते तु देवाः राक्षसाः वा आसन् । धृतराष्ट्रः कश्चित् गन्धर्वराजः अस्ति । पाण्डुराजः मरुद्गणैः सम्बद्धः । विदुरः युधिष्ठिरश्च यमराजस्य अंशेन जातौ । तथैव दुर्योधनः कलिः आसीत् । शकुनिः च द्वापरः आसीत् । दुश्शासनादयः सर्वे राक्षसांश-युक्ताः सन्ति । वायोः अंशेन भीमः, नरनामकस्य महर्षेः अंशेन अर्जुनः, अश्विनीदेवयोः अंशेन नकुलसहदेवौ, चन्द्रस्य अंशेन शिखण्डी च जन्म प्राप्तवन्तः आसन् । तथैव बृहस्पतेः अंशेन द्रोणः, शङ्करस्य अंशेन अश्वत्थामा च जन्म प्राप्तवन्तौ आस्ताम् । भीष्मः अष्टसु वसुषु अन्यतमः । भवन्तः सर्वे विना विलम्बं भागीरथीतटं गच्छन्तु । युद्धे मृतानां सर्वेषां दर्शनं कारयित्वा अहं भवतां दुःखं निवारयिष्यामि'' इति ।

एतानि वचनानि श्रुत्वा सर्वे हर्षनिर्भराः अभवन् । अनुक्षणं सर्वे गङ्गातटं प्रति गतवन्तः । धृतराष्ट्रः पाण्डवैः मुनिभिः च सह तत्र गतवान् । तदा व्यासः गङ्गायां निमज्ज्य युद्धे मृतान् पाण्डवयोधान्, कौरव-योधान् च उच्चस्वरेण आकारितवान् । अनुक्षणं नद्याः तटे महान् कोलाहलः श्रुतः । भीष्मद्रोणादयः एकैकशः नदीतीरं प्रति आगतवन्तः । विराटः, द्रुपदः, उपपाण्डवाः, अभिमन्युः, घटोत्कचः, कर्णः, दुर्योधनः इत्यादयः वीराः येन वेषेण, यत् वाहनम् आरुह्य युद्धभूमिं गतवन्तः आसन् तेन एव वेषेण, तदेव वाहनम् आरुह्य गङ्गाजलतः उपरि आगतवन्तः । इदानीं तेषु शत्रुता काऽपि अवशिष्टा न आसीत् । व्यासः स्वस्य तपोबलेन धृतराष्ट्राय दृष्टिं दत्तवान् । गान्धारीधृतराष्ट्रौ स्वस्य बान्धवान् द्रष्टुं समर्थौ अभवताम् । मृताः वीराः पुनश्च प्रकटिताः अभवन् यत् तत् दृष्ट्वा अन्ये अपि

पुलकिताः अभवन् ।

जीविताः सर्वे मृतैः सह मिलित्वा अनुपमम् आनन्दं प्राप्तवन्तः । तां रात्रिं सर्वेऽपि प्रसन्नतापूर्वकं यापितवन्तः । अनन्तरदिने उषसि मृतात्मानः गङ्गां प्रविश्य अदृश्याः अभवन् ।

अनन्तरं व्यासः जीविताः कौरवनारीः अवदत् - ''भवतीषु या काचित् पत्या सह यदि परलोकं गन्तुम् इच्छति तर्हि सा नदीं प्रविशतु'' इति ।

तदा धृतराष्ट्रस्य सर्वाः स्नुषाः श्वशुरस्य श्वश्र्वाः च अनुमतिं स्वीकृत्य गङ्गानदीं प्रविष्टवत्यः ।

एतस्याः घटनायाः अनन्तरं धृतराष्ट्रस्य दुःखं पूर्णरूपेण उपशान्तम् अभवत् । सः शान्तचित्तेन स्वस्य आश्रमं प्रति गतवान् । मासतः तत्रैव वासं कृतवतः पाण्डवान् सः सूचितवान् यत् भवन्तः हस्तिनापुरं गत्वा शासनकार्यं निर्वहन्तु इति । ततः गमनस्य इच्छा युधिष्ठिरस्य मनसि न आसीत् एव । राज्यशासनस्य इच्छा अपि न आसीत् । युधिष्ठिरस्य इव सहदेवस्य अपि मनसि कुन्तीं त्यक्त्वा गमनस्य इच्छा न आसीत् । किन्तु कुन्ती 'हस्तिनापुरं गच्छन्तु' इति सर्वान् अनुरोधपूर्वकं सूचयन्ती आसीत् । अतः अनन्यगतिकतया तैः प्रतिगन्तव्यम्





अभवत् । धृतराष्ट्रः सर्वान् पाण्डवान् आलिङ्ग्य सर्वेषां शुभप्रयाणम् आशंसितवान् । तदा युधिष्ठिरः सपरिवारं हस्तिनापुरं प्रति गतवान् ।

अनन्तरं कदाचित् युधिष्ठिरं द्रष्टुं नारदः आगतवान् । युधिष्ठिरः आदरपूर्वकं तस्य स्वागतं कृत्वा कुशलादिकं पृष्टवान् ।

ततः नारदः अवदत् - ''अहं गङ्गातटस्य तपोवनानि दृष्ट्वा प्रत्यागच्छन् अस्मि'' इति ।

तदा युधिष्ठिरः अपृच्छत् - ''किं भवान् मम पितृव्यं दृष्टवान् ? कथम् अस्ति सः ? गान्धारीकुन्तीसञ्जयादयः सर्वे कथं सन्ति ?'' इति ।

उत्तररूपेण नारदः अवदत् - ''युधिष्ठिर ! ततः भवतां प्रत्यागमनस्य अनन्तरं धृतराष्ट्रः, गान्धारी, कुन्ती च कुरुक्षेत्रतः गङ्गाद्वारं प्रति गतवन्तः । सञ्जयः, याजकब्राह्मणाः च अग्निहोत्रं नीतवन्तः । गङ्गायाः तीरे भवतः पितृव्यः वायुमात्रस्य भक्षणं कुर्वन् षण्मासान् कठोरं तपः आचरितवान् । गान्धारी जलमात्रस्य ग्रहणं करोति स्म । कुन्ती मासं यावत् निरशनव्रतम् आचरितवती । सञ्जयः दिने एकवारमेव भोजनं करोति स्म । याजकाः अनवरतम् अग्निहोत्रं कुर्वन्ति स्म । तदनन्तरं धृतराष्ट्रः कस्याऽपि साहाय्यं विना अरण्ये भ्रमणम् आरब्धवान् । गान्धारी, कुन्ती च तम् अनुसरतः स्म । कुन्तीदेवी सर्वदा गान्धार्याः योगक्षेमं निर्वहति स्म । एकदा धृतराष्ट्रः गङ्गास्नानं समाप्य आश्रमं प्रति निवर्तमानः आसीत् । तदा वायुः न वाति स्म । क्षणाभ्यन्तरे अरण्यम् अग्निना आवृतम् अभवत् । दावानलं सन्निहितं दृष्ट्वा धृतराष्ट्रः सञ्जयम् अवदत् - ''भवान् अनुक्षणं यत्र अग्निः नास्ति तस्यां दिशि गच्छतु । अहम् अस्मिन् एव अग्नौ दग्धः भूत्वा उत्तमलोकं प्राप्स्यामि । मम एषः आदेशः भवता पालनीयः एव'' इति ।

सञ्जयः अत्यन्तम् कातरतया - ''राजन् ! अग्नौ भवतः दहनम् अहं न इच्छामि । अग्निः सर्वाभ्यः दिग्भ्यः व्याप्नुवन् अस्ति । इदानीं किं करवाव ?'' इति अपृच्छत् ।

धृतराष्ट्रः - ''सञ्जय ! तपस्विनः वायुजलाग्निषु अन्यतमेन येन केनचिदपि कल्प्यमानं मरणं स्वागतीकर्तुं सन्नद्धाः तिष्ठन्ति । विना विलम्बं भवान् इतः निर्गच्छतु'' इति आदिष्टवान् ।

सञ्जयः धृतराष्ट्रं गान्धारीं कुन्तीं च श्रद्धापूर्वकं नमस्कृत्य तान् 'योगसमाधिस्थाः भवन्तु' इति निवेदितवान् । त्रयः अपि तथैव कृतवन्तः । तेषां शरीराणि दग्धानि अभवन् । सञ्जयः दावानलात् आत्मानं संरक्ष्य गङ्गातटम् आगत्य मया मिलितवान् । मां प्रवृत्तं समग्रम् उक्त्वा सः हिमालयस्य दिशि गतवान्'' इति ।

एतां वार्तां ज्ञात्वा पाण्डवाः नगरवासिनः च शोकसागरे निमग्नाः । नारदः युधिष्ठिरं सान्त्वयन् अवदत् - ''दावानलस्य कारणीभूतः अग्निः धृतराष्ट्रस्य एव आसीत् । स्वस्य अग्निना एव मृत्युं प्राप्तवान् इत्यतः सः उत्तमलोकं प्राप्तवान्'' इति ।

युधिष्ठिरः गङ्गानदीसमीपं गत्वा मृतेभ्यः जलतर्पणं दत्तवान् । अनन्तरं श्राद्धादिकं कृत्वा तेन द्वादशे दिने दानानि कृतानि । महाभारतयुद्धस्य अष्टादशानां वर्षाणाम् अनन्तरं धृतराष्ट्रस्य मृत्युः अभवत् । तेषु अन्तिमानि त्रीणि वर्षाणि सः वने वसन् यापितवान् आसीत् ।

धृतराष्ट्रस्य मरणानन्तरम् अष्टादश वर्षाणि यावत् युधिष्ठिरः शासनं कृतवान् । तदा एव कश्चन भयङ्करः विषयः तेन श्रोतव्यः अभवत् - ''मुसलस्य कारणतः सर्वेषां यादवानां मरणम् अभवत्'' इति । कृष्णबलरामौ केवलं जीवतः स्म ।

युधिष्ठिरः सहोदरान् आहूय अपृच्छत् - ''यादवाः सर्वे परस्परकलहेन मृताः इति श्रूयते । अस्माभिः इदानीं किं करणीयम् इति सूचयन्तु'' इति ।

यादवानां विनाशस्य कारणम् एवम् आसीत् - एकदा विश्वामित्रः, कण्वः, नारदः च द्वारकां गतवन्तः । तान् दृष्ट्वा सारणादयः यादवाः साम्बेन स्त्रीवेषं धारितवन्तः । तं मुनीनां समीपं नीत्वा ते अपृच्छन् - ''एषा गर्भवती अस्ति । एतस्याः पतिः पुत्रम् इच्छति । भवन्तः वदन्तु यत् एतस्याः पुत्रः भवति, उत पुत्री ?'' इति ।

तदा मुनयः कोपेन उक्तवन्तः - ''वृष्णीनाम् अन्धकानां च विनाशने समर्थस्य मुसलस्य जन्म भविष्यति'' इति ।

अनन्तरं मुनयः कृष्णस्य दर्शनं कृत्वा प्रवृत्तं सर्वं निवेदितवन्तः । कृष्णः तां वार्तां श्रुत्वा मनसि एव निर्णीतवान् यत् मुनीनां शापः कदापि व्यर्थः न भविष्यति इति ।





# महाराज्ञ्याः पाकः

राजा वीरसेनः, राज्ञी जगदीश्वरीदेवी च कदाचित् पूर्णिमादिने विहारार्थं समुद्रतीरं गतवन्तौ । समुद्रतीरे एकं कुटीरम् आसीत् । तत्र धीवरकुलीयौ दम्पती वसतः स्म । तौ कुटीरात् बहिः रज्जुमये मञ्चे उपविश्य भोजनं कुरुतः स्म ।

धीवरः पात्रात् व्यञ्जनं निष्कास्य स्वस्य स्थालिकायां परिवेषयन् - ''लक्ष्मि ! भवत्याः पाकः अमृततुल्यः भवति सदापि । एतत् मत्स्यव्यञ्जनम् अतिरुचिकरम् अस्ति ! कुलीरस्य व्यञ्जनम् अपि तादृशम् एव !'' इति वदन् पत्न्याः प्रशंसां कृतवान् ।

एतेन सन्तुष्टा धीवरपत्नी उक्तवती - ''श्वः मत्स्यैः अपरं विशिष्टं व्यञ्जनं करिष्यामि । तत् सकृत् खादितं चेत् प्रतिदिनम् अपि तदेव आवश्यकम् इति भवान् वदेत्'' इति ।

एतेन दृश्येन महाराज्ञी नितरां प्रभाविता अभवत् । झटिति सा निश्चयं कृतवती - 'इतः परम् अहम् अपि स्वयं पाकं करिष्यामि, यस्य खादनेन पतिः मम श्लाघनं कुर्यात्' इति । कल्पनालोके विहारः आरब्धः तया ।

परेद्यवि सा पाकशालातः पाचकान् प्रेषितवती । परिश्रमेण स्वयं पाकं सज्जीकृतवती च । तया सज्जीकृतानि व्यञ्जनानि एव पाचकाः राज्ञे परिवेषितवन्तः ।

राज्ञः भोजनस्य आरम्भात् पूर्वम् एव राज्ञी अवदत् - ''मया अद्य ऐदम्प्राथम्येन पाकः कृतः । आस्वाद्य वदतु यत् पाकः कथम् अस्ति इति । भवतः निमित्तमेव मया पाकः सज्जीकृतः अस्ति'' इति ।

राज्ञ्या निर्मिते व्यञ्जने लवणं न आसीत् । शाके कटुत्वम् अधिकम् आसीत् । अपरः शाकः दग्धः आसीत् । पायसे उपयुक्तं क्षीरं दूषितम् आसीत् । किन्तु राजा राज्ञीं निराशां कर्तुं न इच्छति स्म । अतः सः पाकस्य प्रशंसां कुर्वन् - ''भवत्या कृतः पाकः अमृततुल्यः अस्ति । भवत्या एतादृशः उत्तमः पाकः क्रियते इति मया स्वप्ने अपि न ऊहितम् आसीत्'' इति अवदत् ।

महाराजस्य प्रशंसया महाराज्ञी असीमम्

'श्रीमाता'

आनन्दं प्राप्तवती । किन्तु यदा भोजनार्थम् उपविष्टं तदा तस्यै किमपि न अरोचत । तथापि तया निश्चितम् आसीत् यत् पतिः मम पाकम् इष्टवान् अस्ति इति । अतः सा पतिम् उद्दिश्य - ''इतःपरम् अहमेव पाकं करिष्यामि । तेन प्रतिदिनं सानन्दं भवान् भोजनं कुर्यात्'' इति उक्तवती ।



पत्न्याः वचनेन राजा चिन्तामग्नः अभवत् । उष्णं घृतं पीतवतः स्थितिः आसीत् तस्य । प्रतिदिनं पत्न्या कृतः पाकः खादनीयः इति स्मरणेन एव भीतः सः तां पाककार्यात् निवारयितुम् इच्छन् अवदत् - ''भवती किमर्थं वृथा कष्टम् अनुभवति ?'' इति ।

तदा राज्ञी उक्तवती - ''पत्युः निमित्तं क्रियमाणं कार्यं कदापि पत्न्याः कष्टाय न भवति'' इति ।

तद्दिनतः महाराजः कष्टजाले पतितः । विविधानि व्यञ्जनानि कृत्वा बलात् परिवेषयन्तीं राज्ञीं प्रतिदिनं स्वप्ने पश्यति स्म सः । सप्ताहाभ्यन्तरे वैराग्यं प्राप्तं तेन ।

'एतस्याः कठोरसमस्यायाः निवारणं कथं भवितुम् अर्हति ?' इति बहुधा चिन्तनं कृतवान् सः । किन्तु कोऽपि उपायः न स्फुरितः ।

अन्ते सः आस्थानविदूषकं बलरामम् आहूय - ''बलराम ! राज्ञयाः पाकात् मां मोचयतु । कथञ्चिदपि शीघ्रम् एतां समस्यां निवारयतु'' इति उक्तवान् ।

तदा विदूषकः बलरामः - ''महाराज ! भयं मास्तु । चक्रवर्तिनः जन्मदिनोत्सवे भागम् ऊढ्वा पञ्चदिनाभ्यन्तरे प्रत्यागमिष्यामि । आगमनसमनन्तरमेव पूर्णरूपेण भवन्तं समस्यातः मुक्तं करिष्यामि'' इति वदन् महाराजे धैर्यं पूरितवान् ।

चक्रवर्तिनः जन्मदिनं राज्ञः वीरसेनस्य पितुः श्राद्धं च एकस्मिन् एव दिने भवति स्म । अतः वीरसेनमहाराजः कदापि चक्रवर्तिनः जन्मदिनोत्सवे भागं न ऊढवान् आसीत् । किन्तु तस्य वर्षस्य जन्मदिनस्य किञ्चित् वैशिष्ट्यम् आसीत् । तस्मिन् एव वर्षे चक्रवर्तिनः विवाहः जातः आसीत् । विवाहानन्तरं तस्य प्रथमं जन्मदिनाचरणम् आसीत् । चक्रवर्तिनः पत्नी बहु लावण्यवती इति श्रुतम् आसीत् राज्ञा ।

उत्सवे भागम् ऊढ्वा विदूषकः बलरामः चतुर्णां दिनानाम् अनन्तरं प्रत्यागतः । महाराज्ञी जगदीश्वरी अनुक्षणं तं स्वस्य

अन्तःपुरम् आहूतवती । चक्रवर्तिनः पत्नी कीदृशी, सा कथम् अस्ति इत्यादीन् विषयान् ज्ञातुं तस्याः महती कातरता आसीत् ।

राज्ञी विदूषकम् अपृच्छत् - ''किम् उत्सवः महता वैभवेन आचरितः ? चक्रवर्तिनः पत्नी बहुसुन्दरी इति श्रूयते । किम् एतत् सत्यम् ?'' इति ।

निराशतां प्रकटयन् विदूषकः अवदत् - ''भवत्याः मुखे या कान्तिः अस्ति, तादृशी कान्तिः तस्याः मुखे कथम् ? दीपशिखां गृहीत्वा अन्विष्टं चेत् अपि तादृशी कान्तिः तत्र नैव दृश्यते । भवत्याः सौन्दर्यं सहजम् । तस्याः सौन्दर्यं तु आलङ्कारिकं कृतकं च । किन्तु एषु दिनेषु भवती अधिककालं पाकशालायां यापयति इति भाति । धूमकारणतः भवत्याः मुखस्य कान्तिः न्यूना जायमाना अस्ति । नेत्रे रक्तता अधिका दृश्यते । चर्म अपि कान्तिहीनं दृश्यते'' इति ।

विदूषकस्य वचनात् राज्ञ्याः मुखं विवर्णम् अभवत् । 'मुखस्य कान्तिः न्यूना अभवत्' इति श्रुत्वा राज्ञ्या महान् आघातः प्राप्तः इव । राज्ञ्याः मुखे जायमानं परिवर्तनम् परिशीलयन् विदूषकः अवदत् - ''आर्ये, किन्तु चक्रवर्तिनः पत्न्याः एकं वैशिष्ट्यं भवत्या ज्ञातव्यम् एव'' इति ।

''किं तत् ?'' इति झटिति पृष्टवती राज्ञी ।

विदूषकः अवदत् - ''उत्सवसमये चक्रवर्ती तत्पत्नी च सर्वैः सह उपविश्य भोजनं कृतवन्तौ । चक्रवर्तिनः पत्नी तत्र स्थापितेषु चतुर्विंशतिव्यञ्जनेषु पत्ये यानि व्यञ्जनानि रोचन्ते स्म तानि चित्वा स्वयं परिवेषयति स्म । पत्न्याः परिवेषणेन प्रसन्नः चक्रवर्ती मनसा पत्नीं प्रशंसति स्म । सन्तुष्टः चक्रवर्ती यत् भोजनं कुर्वन् आसीत् तत् दृश्यम् अत्यन्तं मनोहरम् आसीत्'' इति ।

तदारभ्य राज्ञी पाककरणं त्यक्तवती । पाचकैः निर्मितानि व्यञ्जनानि एव पत्ये परिवेषयति स्म सा ।

एवं राज्ञः कष्टानि समाप्तानि । विदूषकस्य उपायस्य कारणेन एव कष्टम् अपगतम् इत्यतः सन्तुष्टः राजा विदूषकाय मौक्तिकहारम् उपायनरूपेण दत्तवान् ।





चन्दमामाप्रस्तुतिः
अजेयः गरुडः
कला - पाणिः
मुख्यमन्त्रिणः पुत्रः आदित्यः राज्ञः आदेशं प्राप्य तान् लुण्ठाकान् उपायेन गृहीतवान्, ये च जनान् पीडयन्तः आसन् । 'मम भवतः च पित्रोः मरणम् एकस्मिन् एव काले जातम्' इति आदित्यम् उक्तवती अरुणा । सा तस्मै एकं पुस्तकं दत्तवती । आदित्यः स्वस्य पितुः हस्ताक्षराणि अभिज्ञातवान् । पुस्तके गरुडस्य तन्मातुः च कथा आसीत् ।
ततः...




राजा, मन्त्री, आदित्यः च लुण्ठाकनायकं ग्रहीतुं यदा योजनां रचयन्तः आसन् तदा कश्चन पक्षी आगत्य एकं पत्रम् अपातयत् ।
किम् एतत् ! पत्रं पठ्यताम् !




यदि भवान् मदनुचरान् बन्धमुक्तान् न कुर्यात् तर्हि गरुडगिरेः अरण्ये रवीन्द्रस्य शवः प्राप्यते...
मम पुत्रस्य का वा गतिः स्यात् ?




राजा भीतः । सः कम्पमानः जातः ।




यावत् सः लुण्ठाक-नायकः स्वतन्त्रः भवति तावत् अस्माकं न भवति निश्चिन्तता ।


सेनापतिः मां न इच्छति इति तु सुस्पष्टम् अस्ति ।


मम पुत्रस्य कोऽपि अपायः कदापि न स्यात् । कारागारस्थान् मुञ्चन्तु तावत् ।...
यथाज्ञापयति महाराजः ।


सर्वे कारागारस्थाः लुण्ठाकाः बन्धविमुक्ताः जाताः ।


आदित्यः रवीन्द्रदेवस्य रक्षणार्थं ततः निर्गतः ।


कस्याश्चित् गुहायाः समीपे रहस्य-वार्तालापः श्रुतः आदित्येन ।


गुहाद्वारे मुखावरणं धृतवान् कश्चित् अश्वारोही तेन दृष्टः । तदीयौ हस्तौ पृष्ठभागे बद्धौ आस्ताम् ।


तदीयं मुखावरणम् अपनीतवता आदित्येन हासं निरोद्धुं न शक्तम् ।


उत्साहशीलः रवीन्द्रदेवः अद्य पराजितः इव लक्ष्यते ।


भवान् न आगतवान् स्यात् चेदपि तान् दुष्टान् अहं संहरेयम् एव ।


पर्वतप्रदेशः समग्रः कौमुद्या आप्लुतः आसीत् । कश्चन पुरुषः वेषं परिवृत्य स्थितः आसीत् रक्षणार्थम्...


गुहायाः अन्तः एकः समावेशः प्रवर्तते स्म ।
सः गरुडः कः ?
सः किमर्थम् अस्मान् मुक्तवान् ?


रामसिंहः गुहातः बहिः आगत्य तस्य रहस्यमयपुरुषस्य समीपं गच्छति ।
धन्यवादाः भवते । वयं स्वतन्त्राः जाताः । कः भवान् ?
किं भवान् मुख्य-मन्त्रिणः अङ्गरक्षकः न आसीत् ?


यत् भवन्तः कुर्वन्तः सन्ति तत् अन्याय्यम् इति किं न ज्ञायते भवता ?


अहं मुख्यमन्त्रिणः अङ्गरक्षकः आसम् इति तु सत्यम् । मया सेनापतिः भीरुत्वेन परिलक्षितः । किन्तु अयमंशः मया गोपनीयः आसीत् । अन्यथा सः माम् अमारयिष्यत् ।


कथनम् अनुवर्तताम्
रवीन्द्रदेवः जनान् लुण्ठयति स्म । तस्य दुराचारः असीमः आसीत् । अतः जनैः राजविरोधः कारणीयः अभवत् ।
सेनापतिः एव मुख्यमन्त्रिणं मारितवान् इत्येतत् किं भवता सुस्पष्टं ज्ञायते ?


सेनापतिः यदा राज्ञः प्रकोष्ठं प्रविष्टवान् तदा कस्यचित् पादध्वनिः श्रुतः । सः आसीत् मुख्यमन्त्रिणः । सः रहसि स्थित्वा राज-सेनापत्योः वार्तालापं श्रोतुम् इच्छति स्म..


महाराज ! जनाः भीताः सन्ति । ते रवीन्द्रदेवस्य कार्यस्य औचित्यं चिन्तयन्तः सन्ति ।


एतस्य तात्पर्यं यत् सेनापतिः मुख्य-मन्त्रिणम् एतस्मात् व्यवहारात् दूरे स्थापयितुम् इच्छति स्म इति ।


तदा राजः आदित्यं प्रेषितवान् । ततः अस्माकं योजना असफला जाता । वयम् अत्र निर्दोषाः । अहं गच्छामि तावत् ।
रामसिंहः
स्वनाम श्रुत्वा रामसिंहः परिवृत्य दृष्टवान् । तत्र मन्दहाससहितं मुखं दृष्टम् ।
- (अनुवर्तते)

# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

जून्मासस्य पञ्चमे दिनाङ्के विश्वपरिसरदिनम् आचर्यते । अतः एतस्य मासस्य प्रश्नावली परिसर-भूगोलादिसम्बद्धा भवति । एतद्विषयकं ज्ञानं स्वस्य कियत् अस्ति इति स्वयं जानन्तु भवन्तः ।

१. भारतस्य सुदीर्घा नदी का ?
२. का नदी पूर्वं 'वितस्ता'नाम्ना निर्दिश्यते स्म ?
३. भारतस्य अत्युन्नतपर्वतस्य नाम गाड्विन् आस्टिन् इति । तत्पर्वतवासिनः नामान्तरेण निर्दिश्यन्ते । तत् नाम किम् ?
४. औन्नत्या द्वितीयस्थानम् आपन्नस्य भारतीयशिखरस्य नाम किम् ?
५. राष्ट्रियारण्यनीतिः वदति - अमुकपरिमाणके प्रदेशे अमुकसङ्ख्याकाः वृक्षाः स्युः इति । तत् परिमाणं किम् ?
६. कस्मिन् राज्ये अरण्यम् अत्यल्पप्रमाणेन अस्ति ?
७. 'प्राजेक्ट्टैगर्'नामिका योजना कदा आरब्धा ?
८. नलसरोवरं कुत्र अस्ति ? तत्र किं वा द्रष्टुं शक्यम् ?
९. भारते खनिजाङ्गारसङ्ग्रहकार्यं कदा कुत्र आरब्धम् ?
१०. भारते किं खनिजम् अधिकप्रमाणेन लभ्यते ?
११. खनिजाङ्गारसङ्ग्रहक्षेत्रे भारतस्य किं स्थानम् ?
१२. सहजेतिहासस्य राष्ट्रियसङ्ग्रहालयं द्रष्टुं कुत्र गन्तव्यम् ?
१३. अरावलीपर्वतश्रेणी कस्मिन् राज्ये अस्ति ?
१४. हिराकुड्योजना कां नदीम् अवलम्ब्य रचिता ?
१५. एषु दिनेषु श्रूयते यत् कर्णाटकस्था कोलारसुवर्णखनी पिधीयते इति । अत्र सुवर्णसङ्ग्रहः कदा आरब्धः ?

*(उत्तराणि अग्रिमे मासे)*

### 'मे'प्रश्नावल्याः उत्तराणि

१. सि. एफ्. अण्ड्रूस्वर्यः ।
२. डा॰ अन्नी बेसेण्ट् । सा 'थियासफिकल्सोसैटी' इत्येतस्याः संस्थायाः अध्यक्षा आसीत् ।
३. सर् विलियं जोन्स् । सः कालिदासस्य 'शाकुन्तल'नाटकस्य आंग्लानुवादम् ऐदम्प्राथम्येन सज्जीकृतवान् ।
४. ला मार्टिन्यूर् ।
५. मेडालिन् स्लाडे । सा मीराबायी इति नाम प्राप्तवती ।
६. मदर् थेरेसा ।

# अप्रयोजकः

प्राचीने काले कलिङ्गदेशं धीरसिंहः नाम राजा पालयति स्म । कदाचित् सः घोरेण चर्मव्याधिना ग्रस्तः जातः । बहुधा चिकित्सा कारिता । तथापि व्याधिः न उपशान्तः, प्रत्युतः दिने दिने सः प्रवृद्धः । तदा राजवैद्यः उक्तवान् - ''महाराज, सर्वथा अप्रयोजकस्य कस्यचित् रक्तेन भवतः शरीरं लेपितं चेत् भवान् रोगात् मुक्तः भवेत्'' इति ।

राज्ञः आज्ञायाः अनुसारं राजभटाः सर्वत्र अप्रयोजकस्य अन्वेषणे उद्युक्ताः अभवन् । बहुधा अन्विष्य तैः अष्टावक्रनामकः कश्चन गृहीतः । सः किमपि कार्यं न जानाति स्म । मातापितरौ तं जुगुप्सया पश्यतः स्म । अतः तौ सुवर्णं प्राप्य तं विक्रीतवन्तौ ।

राज्ञः पुरतः सैनिकाः यदा खड्गेन शिरच्छेदं कर्तुम् उद्युक्ताः तदा सः अट्टहासं कुर्वन् अवदत् - ''अप्रयोजकः इति मत्वा खलु अहं गृहीतः भवद्भिः ? मम रक्तेन तुल्यम् औषधम् प्रपञ्चे एव नास्ति अद्य । एवं स्थिते अहम् अप्रयोजकः कथं स्याम् ?'' इति ।

एतत् श्रुत्वा विवेकं प्राप्तवान् राजा अष्टावक्रं बन्धविमुक्तं कृत्वा राजवैद्यं तर्जितवान् । अन्यया चिकित्सया स्वस्य व्याधेः निवारणं प्राप्तवान् च ।





# जयः कस्य ?

मगधदेशस्य राज्ञः उभे पत्न्यौ । ते उभे अपि एकस्मिन् एव दिने एकस्मिन् एव समये पुत्रं प्रसूतवत्यौ । तयोः एकस्य नाम अमरसिंहः इति, अपरस्य नाम जयसिंहः इति च निश्चितम् अभवत् ।

यदा तौ अष्टवर्षीयौ जातौ तदा राजा तौ गुरुकुलं प्रति प्रेषितवान् । गुरुकुले तौ श्रद्धया विद्याभ्यासं कृतवन्तौ । गच्छता कालेन तयोः विद्याभ्यासः समाप्तः अभवत् ।

उभौ अपि राजकुमारौ बलेन रूपेण च समानौ आस्ताम् । सर्वासु अपि विद्यासु तयोः सामर्थ्यं समानम् आसीत् । युद्धविद्यायाम् अपि तयोः कौशलं समानम् एव आसीत् ।

किन्तु द्वयोः कश्चन भेदः अपि आसीत् । अमरसिंहः अश्वारोहणे खड्गविद्यायां च प्रवीणः आसीत् । जयसिंहः गजारोहणे मल्लयुद्धे च प्रवीणः आसीत् । द्वौ अपि परस्परम् अत्यन्तं स्नेहेन आस्ताम् ।

राजा वृद्धः जातः आसीत् । 'एतयोः कतरः सिंहासने उपवेशनीयः ?' इति समस्यया सः पीडितः अभवत् । द्वयोः अपि जन्म एकस्मिन् एव दिने जातम् आसीत् । अतः ज्येष्ठः कः, कनिष्ठः कः इति प्रश्नः एव न उद्भवति स्म । राज्यस्य विभागकरणम् अपि शक्यं न आसीत् । अतः द्वयोः योग्यतां परीक्ष्य यः योग्यः अस्ति तस्मै राज्याधिकारः दातव्यः इति निश्चितवान् राजा । राजा मन्त्री च बहूनि दिनानि चर्चां कृत्वा एतं निर्णयं स्वीकृतवन्तौ । तथापि द्वयोः कः उत्तमतरः इति निर्णये तौ असमर्थौ जातौ ।

राज्यस्य उत्तराधिकारिणः विषये चिन्तनं प्रचलति इति द्वौ अपि राजकुमारौ न जानीतः स्म ।

तेषु एव दिनेषु कौशिकदेशस्य राजकुमार्याः स्वयंवरकार्यक्रमः घोषितः अभवत् । स्वयंवरसमये विविधकौशलानां विषये स्पर्धाः



आयोजिताः आसन् । 'सर्वासु अपि स्पर्धासु यः उच्चाङ्कं प्राप्स्यति तस्य विवाहः राजकुमार्या सह भविष्यति' इति घोषितम् आसीत् कौशिकदेशराजेन ।

स्वयंवरस्य वार्तां श्रुत्वा राजा मन्त्री च निश्चितवन्तौ यत् राजकुमारौ तत्र प्रेषणीयौ इति । यतः तयोः विश्वासः आसीत् यत् तत्रैव राजकुमारयोः योग्यतायाः परीक्षा भवेत् इति । अतः राजा पुत्रौ आहूय सूचितवान् यत् भवद्भ्यां कौशिकदेशीयस्वयंवरं प्रति गन्तव्यम् इति ।

पितुः सूचनानुसारम् अमरसिंह-जयसिंहौ कौशिकदेशस्य राजकुमार्याः स्वयंवरे भागं वोढुं गतवन्तौ ।

स्वयंवरार्थं अनेकेभ्यः देशेभ्यः राजकुमाराः आगताः आसन् । विभिन्नाः स्पर्धाः तत्र प्रवृत्ताः । तासु सर्वासु अपि स्पर्धासु अमरसिंहजयसिंहौ इतरराजकुमारान् पराजित्य समानरूपेण विजयिनौ जातौ । अन्ते तयोः यदा स्पर्धा अभवत् तदा अश्वारोहणे खड्गयुद्धे च अमरसिंहः विजयं प्राप्नोत्, मल्लयुद्धे गजारोहणे च जयसिंहः विजयं लब्धवान् । एवम् उभाभ्याम् अपि समानः विजयः प्राप्तः आसीत् ।

अतः कौशिकराजः अपि 'एतयोः कतराय युवकाय मम पुत्री दातव्या?' इति निर्णयं कर्तुम् असमर्थः अभवत् ।

सः निर्णयकरणार्थं दिनत्रयात्मकम् कालावकाशम् अपेक्षितवान् । अतः सः सर्वान् राजकुमारान् निवासस्थानं प्रति प्रेषितवान् ।

अनन्तरं सः मन्त्रिभिः सह परामृश्य

घोषणां कारितवान् – ''अमरसिंह-जयसिंहयोः कः श्रेष्ठः इति यः युवकः वदति तस्मै द्वितीया राजकुमारी अर्धराज्यं च दीयते'' इति ।

घोषणायाः अनन्तरं परेद्यवि कश्चन मुनिः शिष्येण सह राजसभाम् आगतवान् । राजा तम् आदरेण स्वागतीकृत्य आसनदानादिना सत्कृतवान् । ततः मुनिः राजानम् अवदत् – ''राजन्, भवतः पुत्र्याः विवाहस्य या समस्या उत्पन्ना अस्ति, तां मम शिष्यः निवारयिष्यति'' इति ।

तदा राजा अपृच्छत् – ''कः सः परिहारोपायः ?'' इति ।

तदा मुनेः शिष्यः राजानम् अवदत् – ''अमरसिंहः अश्वारोहणे खड्गयुद्धे च जयसिंहात् अपि श्रेष्ठः । किन्तु मल्लयुद्धे गजारोहणे च न्यूनं सामर्थ्यं तस्य । किन्तु गजस्य उपरि स्थितात् खड्गविहीनात् अपि अश्वस्य उपरि स्थितः खड्गधारी एव श्रेष्ठः खलु ? न केवलं तावत्, अश्वः गजस्य उपरि कूर्दनं कर्तुं शक्नोति । किन्तु गजः अश्वस्य उपरि कूर्दनं कर्तुं न शक्नोति । अन्यच्च, गजस्य उपरि स्थितः कश्चित् अश्वारोहिणं खड्गधारिणं कदापि मारयितुं न शक्नोति । किन्तु गजारोहिणं मल्लं खड्गधारी अश्वारोही सहजतया मारयितुं शक्नोति । अतः जयसिंहात् अपि अमरसिंहः एव श्रेष्ठः'' इति ।

मुनेः शिष्यस्य तर्कं सर्वे अङ्गीकृतवन्तः । 'समस्या परिहृता' इति राजा नितरां सन्तुष्टः अभवत् ।

अनुक्षणं मुनिः, तस्य शिष्यः च छद्मवेषं परित्यज्य नैजरूपेण स्थितवन्तौ । मुनिवेषेण अमरसिंहः, शिष्यवेषेण जयसिंहश्च आगतौ आस्ताम् ।

कौशिकराजः स्वस्य पुत्र्योः विवाहं राजकुमाराभ्यां सह कारयित्वा जयसिंहाय अर्धराज्यं दत्तवान् ।

एतेन सह मगधदेशस्य समस्या अपि परिहृता । अतः मगधराजः अमरसिंहस्य राज्याभिषेकं कारितवान् ।






# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'मे'मासीयस्पर्धाशीर्षिकाप्रेषकः -

**एन्. शोभना**

B-FF4, पार्सन् गार्डन्स्,
मेलूरुरोड् श्रीरङ्गम्,
तिरुचि - ६२० ००६

**पुरस्कृतशीर्षिका**





मलिनानि पुष्पाणि, तथापि तुष्टिः ।
बहुमूल्यकानि क्रीडनकानि, तथाप्यतुष्टिः ।

**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**

**भारते रू. १२० - ००**

Payment in favour of CHANDAMAMA INDIA LIMITED. For details address your enquiries to:
New 82 (old 92), Defence Officers' Colony, Ekkatuthangal, Chennai - 600 097.